# तत्त्वावतारः ।

प्रकाशक —

शेठ मेघजी थोभण

संशोधक —

न्यायतीर्थ पंडित श्री बेचरदास जीवराज.

लेखक

मुनि देवचन्द्र.




मुनिपुङ्गव न्यायरत्न श्री रत्नचन्द्रस्वामिनः !

सन्ति च श्वेताम्बर "स्थानकवासी" ति सम्प्रदाये अद्वितीयनैयायिकाः न्यायनिष्णाता भवन्तः अतः

श्रीमतां शुभवतां भवतां सुनामधेयेन

साकं संयोज्येदं न्यायपुस्तकं

"तत्त्वावतार" नामकम् च

समर्पयितुमुत्सुको

ऽहम् मुनिश्री

देवचन्द्रः



## વીર !

શ્રીયુત શેઠ મેઘજીભાઈ થોભણ જે પી તરફથી કચ્છ માડવી મા "જૈન સસ્કૃત પાઠશાળા" સવત્ ૧૯૬૩ના ફાગણ વદિ ૯ ને દિવસે ઓપન કરાયેલ છે ગાળાને નિભાવવા સ્થાયી ફંડ રૂ ૨૬૦૦૦ છવીશ હજાર છે તેના વ્યાજમાથી શાળા ચલાવવામા આવે છે આ શાળામા સ્થાનકવાસી કે દેરાવાસીનો ભેદ નથી બન્ને ફિરકાવાલા સાધુઓ અને ગૃહસ્થો લાભ લઇ શકે છે

આ શાળામા સસ્કૃત, વ્યાકરણ, કાવ્ય, કોષ, અલકાર અને ન્યાયશાસ્ત્રનો અભ્યાસ કરાવવામા આવતો, સાધુઓ સારી રીતે લાભ લેતા, શાળાને અગે શેઠ તરફથી એક ન્હાનુ પુસ્તકાલય છે જેમા સસ્કૃતના અભ્યાસીઓને અભ્યાસ અને વાચન માટે પુસ્તકો પુરા પાડવામા આવેલ છે

"તત્ત્વાવતાર" ના લેખક નૈયાયિક પડિત મુનિ શ્રી દેવચદ્રજી મહારાજે પણ આ શાળામાજ વિશેષ અભ્યાસ કરેલ છે

આ શાળામા પ્રથમ કાલાવડના પડિત લક્ષ્મીશકર શાસ્ત્રીને રોકેલા ત્યાર પછી કચ્છ ભુજના શાસ્ત્રી પોપટભાઇને રોકેલા હતા ત્યાર બાદ કાશીના નૈયાયિક પડિત રાજારામ દીક્ષિતને મોટા પગારથી રોકવામા આવેલ હતા તેઓ સ્વર્ગસ્થ થવાથી હાલમા ભુજના ન્હાનાલાલને રોકવામા આવેલ છે જેઓ ઇગ્લીશ વિદ્યાર્થિઓને અભ્યાસ કરાવે છે હાલમા સાધુઓ અભ્યાસ કરનાર કોઇ નથી શેઠશ્રીનો ધર્મપ્રેમ સાથે જ્ઞાનપ્રેમ અધિક હોઇને આ શાળા ખતથી ચલાવે છે

શેઠ મેઘજીભાઇએ પોતાની જીદગીમા અત્યાર સુધી ૩ અઢીલાખને આશરે સદ્વ્યય કરેલ છે તેમણે પોતાની જીદગીને સફલ કરી છે માટે મારા તેમને ધન્યવાદ છે લેખક,

લાલજી લધુભાઇ શાહ-જામનગરવાલા



શેઠ મેઘજીભાઈ થોભણ જે પી

કચ્છ–માંડવીવાળા




( पद्य-गद्यात्मिका )

दीप्तित्वाद्राजते यश्च, ख्यातेः राजेति संज्ञया,
चिच्छक्तौ रमते राम राजारामेति योजनात् १

पारिणा न्यायतन्त्रस्य, दीक्षितोपाधिधारिणा,
स्मारं स्मारं प्रयच्छामि,—ते स्मरणाञ्जलिं मुदा २

अयि ! मच्चित्ताराम,—पोषक ! त्वया साहित्यरसात्मा,
विकसितात्मकलिकाऽभू, या शुष्का तनुवादिकायाम. ३

अर्पितं नवजीवनं, चिच्छक्तिर्न्यायदर्शनबोधात्,
भवता हृत्कोरके मे, सत्प्रेमपयस्सिंचनत्वाच्च ४

त्वदीयात्मन उदार, चिन्मयं प्रकाशमवाप्य नूतनं,
प्रोल्लसितं प्रेम पुष्पं, प्रमेयानि सुरभिसमित्र ५

विस्मरामि प्रसादं, किं श्रीमतोऽनवद्यविद्यागुरो !,
स्फारोपकारभारं, कथं प्रत्युपकरोमि सादरं ६

प्रत्युपकर्तुमात्मानं, विनश्वरं प्राज्यराज साम्राज्यं
बुध्वा द्रव्यं प्रभृतिं, समर्पयामि च तत्र सर्वस्वं ७

स्याद्प्रियविचाररसिक ! सुदार्शनिकप्रवर—
न्यायशिक्षादीक्षानिचक्षणश्रीराजारामदीक्षित !
श्रीमद्भिः स्वपर्यायाणां कृतं तत्कथमेतन्मर्त्यलोके,
विवत्सा न कृता ? श्रीमतां परमात्मनिचितं सखम ?

વેદમૂર્તિ ન્યાયરત્ન



પંડિત રાજારામ દીક્ષિતજી

મુ૦ બનારસ ( કાશી )

આનંદ પ્રી. પ્રેસ-ભાવનગર




(पद्य-गद्यात्मिका)

दीप्तित्वाद्राजते यश्च, शमैः राजेति संज्ञया,
चिच्छक्तौ रमते राम राजारामेति योजनात्. १

पारिण न्यायतन्त्रस्य, दीक्षितोपाधिधारिण,
स्मारं स्मारं प्रयच्छामि,—त स्मरणाञ्जलिं मुदा २

अयि ! मच्चित्ताराम,—पोषक ! त्वया साहित्यरसात्मा,
विकसितात्मकलिकाऽभू, या शुष्का ननुवाटिकायाम्. ३

अर्पित नवजीवन, चिच्छक्तिम न्यायदर्शनबोधात्,
भवता हृत्कोणे मे, सद्प्रेमपयस्सिंचनत्वाच्च ४

त्वदीयात्मन उदार, चिन्मय प्रकाशमवाप्य नूतन,
प्रोल्लसित प्रेम पुष्प, प्रसयाति सुरभिसमिश्र ५

विस्मरामि प्रमाद, किं श्रीमतोऽनवद्यनिरागुणे !,
स्वागोपकारभार, कथ प्रत्युपकरोमि सान्द्र ६

प्रत्युपकर्तुमात्मान, विनश्वर राज्यराज साम्राज्य
तुच्छ्वा द्रव्य प्रभृति, समर्पयामि च तव सदस्व ७

स्याद्प्रियनिगारसिक ! सुदर्शितप्रसर—
न्यायशिक्षादीक्षानिचयाश्रीराजारामदीक्षित !
श्रीमद्भि स्वप्रयाणा कृत तत्कथमेतन्मर्त्यलोके,
विवत्सा न कृता ? श्रीमता परमात्मनिचित सज्जम ?

किमस्माकं प्रेमशैथिल्यं दृष्टं ?, किं च कुरंगवारि वद्-
ऽस्मार प्रतिभात ? अस्तु !
अयि ! अमृतमयि ! कथं रोचेत भवद्भ्यो विषमय-
मर्त्यसुखव्रातं ? तर्हि मानदं विलसतुनराम् ।
शुभवत भवत विश्वेश्वर चरणारविंदे
तत्रैव विश्राम्य कल्याणभाज श्रीभवतु,
अग ! विकसित प्रौढ पुष्प सदृश वेदमूर्ते !
सहितायष्ट वेदविकृतिविज्ञान सुकृतिन् !
प्रार्थयिष्येऽहमत्रत युष्माकं श्रेय श्रिये
परमशंकर विश्वनाथस्य सविधे,
श्रीमतामात्मान सर्वदा-सर्वत्र च शांतिर्भवतु

## उपसंहार

गानामृत यस्य करारविंद, ज्ञानामृत यस्य मुखारविंद,
कृपामृत यस्य मनोऽरविंद, स वल्लभ कस्य नरस्य न स्यात्

संवत् १६८१
कार्तिक शुक्ला
प्रतिपदा

लेखक —
मुनि देवचंद्र



# ग्रंथकार परिचयः

सुधर्म्मगणिना पाट्टे,--पर्ये दिगम्बरादिभि ,
मतैर्गच्छैश्च खडित,--ऽप्यखड मन्वत स्वक १
श्वेताम्बरदशापन्नो, [1]धर्म्म--वृद युगाधीशा ,
देवजित्स्वामिनस्तेषा, शिष्यस्तिलकसिंहश्च २
कर्मचद्रस्तु तच्छिष्य , श्री धीमान् प्रभावक ,
तच्छिष्यासगोऽर्ह, लीनावलीन सोदरौ ३
विशुद्धचित्तसवद्धौ, सिद्धान्तपारगामिनौ,
विजयपाल--ज्ञानेंदू, स्याद्वादिनौ च स्वामिनौ ४
ज्ञातृणा निश्चितत्त्वस्य, असद्‌मतस्य भेतृणाम ,
विजेतृणा कषा यस्य, श्रीमद् सत्यस्य नेतृणा ५
विजयपाल स्वामिना, तच्छिष्य रत्नचद्र वै,
व्याख्यानापरभक्तकठौ, आसीत कान्तिमान् सुधी ६
तच्छिष्य कर्मसिंह स्वामी, गुरुगणुपकारक ,
तत्पादपकज लीन , विनयो देवचद्रोऽह ७
निर्मितोऽय मया ग्रन्थ , ग्रथित स्वरव्यजनै ,
पूर्वर्षिन्यायसूत्रेण, पुष्पमालेव सूत्रित ८
ख्यात पौराणिकोऽनूप, कच्छदशेति साप्रत,
यदुवशे समुद्‌भूत , श्रीमद्‌खेंगारश्च भूपति ९
तस्य विजयिनि राज्ये, सिंधुनीर विराजित,
समृद्धे धन धान्यैश्च, श्रीमदन पुर शुभे १०
निधिरसनवस्वविधुमित, दीपोत्सवी शोभनवासरऽब्दे,
'विद्यागुरुसहायेन, कृतेय कृति सदा जीयात् ११



---

१ धर्मदासजीना समुदायमा



# तत्त्वावतारः।



इह हि "इह एगेसिं नो सन्ना भवइ, त जहाः–पुरत्थिमाओ वा दिसाओ आगओ अह असि ? दाहिणाओ वा दिसाओ आगओ अह असि ? पच्चत्थिमाओ वा दिसाओ आगओ अह असि ? उत्तराओ वा दिसाओ आगओ अह असि ? उड्ढाओ वा दिसाओ आगओ अह असि ? अहेदिसाओ वा आगओ अह असि ? × × × अत्थि मे आया उववाइए, नत्थि मे आया उववाइए, के अह आसी ? के वा इओ चुओ इह पेच्च भविस्सामि ?" इत्यादि–परमर्षिप्रवचनानुसारेण लौकिकव्यवहारसमगाढाना कुत एतद् उद्गत भवेत्—कोऽहम् ? कुत आयात ? क यास्यामि ? किं करोमि च ? इति। एतादृशी सञ्ज्ञा विना तयममायिते अस्मिन् लोके न हि कश्चित् कुतश्चित् कदाचित किंचिदपि व्यवहारसुखमपि लभेत।

लोको हि सुखैषी—सुखार्थं चैव अहमहमिकया गाढ प्रवृत्तोऽपि प्रत्यक्षयति सबल दुर्बल भक्षयन्तम्, अनुभवति सर्वत्र जीवो जीवस्य जीवनम्, सम्प्रेक्षते च सर्वं सम्बन्धमू—आ स्वार्थम्, नीतिं नीत्याभासेन परिणमन्तीम्, धर्मम्—

अधर्मप्रायकलेवरम्—सगृहीतसरयातीताऽनर्थकमतार्थमर च. एव च सुरालवाच्छादिते द'रभरभृते लोके ता परमर्पिनिर्दिष्टा सज्ञा समाश्रित्यैव स्यात् सर्वे' कोऽपि सुखभाक्—अतस्तामेव सज्ञा स्पष्टयितु प्रवृत्तोऽय ग्रन्थकार एन लघुग्रन्थ प्रमाणकाण्ड-नयकाण्ड—जीवकाण्ड—प्रकीर्णककाण्ड—समन्वयकाण्ड-इति काण्डपञ्चकेन विभज्य मदृभति-आदौ तावत् तत्सज्ञासज्ञापक महावीर ज्ञातपुत्रापरनामान श्रीवर्धमान सस्मरति

ध्यायं ध्याय महावीरं स्मार स्मार गुरोर्गिरम् ।
तत्त्वावताररूपोऽय क्रियते तत्त्वसग्रह ॥ १ ॥

प्रतीतार्थमेतत्

आदौ तावत् प्रमाणकाण्ड प्रथयति—

प्रवृत्ति-निवृत्ति-उपेक्षानिश्चायिनी बुद्धि प्रमाणम् । १॥

बुद्धिर्हि आत्मना सहभाविनी, सा च बुद्धयावरणतारतम्येन त्रिधा भवन्ती प्रमाण-अप्रमाण-तदुभयाभावरूपा सज्ञा लभते तत्र लोके लोकोत्तरे च व्यवहारे प्रमाणरूपैव बुद्धि बुद्धि', नान्या

बुद्धिः, बोध., ज्ञानम्, अनुमानम्, स्मरणम्, प्रत्यभिज्ञानम्, चिन्तनम्, विचारणम्, अनुभवनम्, स्पर्शनम्, आस्वादनम्, घ्राणम्, प्रेक्षणम्, श्रवण च—इति नार्थान्तरम्.

यथा हि कश्चित् पिपासुर्जलगवेषणाय चङ्कममाणो यया बुद्ध्या रूपेण, स्पर्शेन, स्वादेन, जल निश्चिन्वन् जलादानाय प्रवर्तते-सा जलादानप्रवृत्तिनिश्चायिनी बुद्धि प्रमाणम् एव निवृत्तिनिश्चायिनी, उपेक्षानिश्चायिनी च बुद्धिरपि वाच्या

सा च—एकाऽपि तदावरणतारतम्येन अनेकधा भवति इति तां विभागत आह—

**सा द्विधा ॥ २ ॥**

निमित्तभेदेन सा बुद्धिर्द्विधा भवति.

द्वित्वमेव नामग्राहं निर्दिशति—

**सापेक्षा निरपेक्षा च ॥ ३ ॥**

इन्द्रियाणि मनश्च प्रतीतानि वक्ष्यते चात्रैव तत्स्वरूपादिकम्, या बुद्धिः इन्द्रियाणि मनश्च अपेक्षते सा इन्द्रियमनःसापेक्षा यथा अस्मादृशाम् अर्वाग्दृशां घटादिबुद्धिः. या च तानि अनपेक्ष्यैव सम्प्रवृत्ता सा तन्निरपेक्षा यथा दिव्यदृशां वर्धमानादियोगिनां बुद्धिं इन्द्रियाणाम्, मनसश्च विषयाः—ग्राह्यपदार्थाः प्रतीता एव

तद्विषये विशेषस्त्वयम् [ परमर्षिप्रवचनालापकैर्-इन्द्रियादीनां विषये विशेषतां पूर्वप्रतिज्ञातां निदिशति-] इन्द्रियाणां बाह्यः, आभ्यन्तरश्च आकारः—एतानि च पञ्च अपि इन्द्रियाणि द्विधा, तद्यथा—द्रव्यतः, भावतश्च. तत्र द्रव्यतो निर्वृत्ति-उपकरणरूपाणि, भावतो लब्धि-उपयोगात्मकानि तत्र आत्मनि तिरोहितो यो उपयोगः—जागरणम्–सा लब्धिः अर्थात् शाकानयनप्रस्थिते वैयाकरणे यथा व्याकरणविषयो बोधः तिरोहित, तथा ज्ञानावरणपरमाणुक्षयोपशमवशेन कियती चित्शक्तिः तिरोहिता सा—अचराटाऽप्रस्थितमञ्जसाम ज्येवत् लब्धिरूपा—विषयग्रहणे च उपादानकारणरूपत्वेन इन्द्रियशब्देन ज्ञापिता—लब्धिरूपम् इन्द्रियम् या तु चित्शक्तिः आविर्भूता वर्तमाने अर्थक्रियाकारिणी सा उपयोगरूपत्वेन, विषयग्रहणासाधारणकारणत्वेन च उपयोगेन्द्रियम्–

उपयोगरूपम् इन्द्रियम्—एते द्वे अपि भावेन्द्रिये नात्मन पृथ ग्भूते, केवल विस्तररुचिप्रमाणशास्त्राभ्यासपरायणशिष्यानुग्रहणार्थमेव पृथग् विविक्ते—इति भावेन्द्रियम्.

द्रव्येन्द्रिययोस्तु निर्वृत्तिर्नाम प्रतिविशिष्ट. सस्थानविशेष' सा ( निर्वृत्तिर् ) अपि द्विधा—बाह्या, आभ्यन्तरा च तत्र बाह्या पर्पटिकादिरूपा, सा च विचित्रा ( अत एव ) न प्रतिनियतरूपतया उपदेष्टु शक्यते तथाहि—मनुष्यस्य श्रोत्रे नेत्रयोरुभयपार्श्वतो भाविनी, भ्रूगी च उपरितनश्रवणबन्धापेक्षया समे. वाजिनो नेत्रयोरुपरि तीक्ष्णे—चाग्रभागे ( श्रोत्रे ) इत्यादि जातिभेदाद् नानाविधा ( बाह्या निर्वृत्तिः—आकृति. ) आभ्यन्तरा तु निर्वृत्ति सर्वेषामपि जन्तूना समाना ( तामेव दर्शयति— ) " सोतिंदिए ण भते ! किंसठिए पएणत्ते ? गोयमा ! कलबुयासठाणसठिते पएणत्ते चक्खिदिए ण भते ! किं सठिए प० ? मसूरचदसठाणसठिए प० घाणिंदिए ण भते ! ( किंसठिए ) ? गोयमा ! अइमुत्तगचदसठाणसठिते जिब्भिंदिए ण पुच्छा-( किंसठिए ) ? गोयमा ! खुरप्पसठाणसठिते फासिंदिए ण भते ! किंसठिते ? गोयमा ! नाणास ठाणसठिते " " केवल स्पर्शेन्द्रियस्य निर्वृत्तेर् बाह्याभ्यन्तरभेदो न प्रतिपत्तव्य —पूर्वसूरिभिनिषेधात् "

अस्या च आभ्यन्तरायाम्—इन्द्रियाकृतौ येषु इन्द्रियपर माणुषु या विषयग्रहणसाधनता—सा एव उपकरणम्—उपकारकत्वेन—तच्च ( उपकरणम् ) खड्गस्थानीयाया बाह्यनिर्वृत्तेर्या खड्गधारासमाना स्वच्छतरपुद्गलसमूहात्मिका आभ्यन्तरा निर्वृत्तिः—तस्या शक्तिविशेषः—इति उपकरणम्.

इन्द्रियाणा बाहल्यम्—( अत्र सर्वम्—इन्द्रियबाहल्यादिक आभ्यन्तराकृतेरेव अवसेयम )—

सो इंदिए ण भंते ! केवइय बाहल्लेण पण्णत्ते ? गोयमा ! अंगुलस्स असंखेज्जभागे बाहल्लेण पण्णत्ते ? एवं जाव –फासिंदिए ( पञ्चानामपि इन्द्रियाणां समान बाहल्य –स्थौल्यम् )

( अत्र आक्षेप–परिहारौ )

" यदि अंगुलस्य असंख्येयभागो बाहल्यं स्पर्शनेन्द्रियस्य ततः कथ खड्ग–छुरिकादि–अभिघाते अन्तः शरीरस्य वेदनानुभवः ? (इत्याक्षेपः) त्वगिन्द्रियस्य विषयः शीतादयः स्पर्शाः–यथा चक्षुषो रूपम्, गन्धो घ्राणस्य. न च खड्ग–क्षुरिकादि–अभिघाते अन्तः शरीरस्य शीतादिस्पर्शवेदनमस्ति. किन्तु केवलम् दुःखवेदनम्, तच दुःखवेदनमात्मा सकलेनापि शरीरेण अनुभवति–न केवल त्वगिन्द्रियेण ज्वरादिवेदनवत्–ततो न कश्चिद्दोषः " ( इति परिहारः ) ( पुनरपि )–" अथ शीतलपानकादिपाने अन्तः शीतस्पर्शवेदनाऽपि अनुभूयते, ततः कथ सा घटामटाढ्यते ? ( इत्याक्षेपः ) इह त्वगिन्द्रिय सर्वत्रापि प्रदेशपर्यन्तवर्त्ति विद्यते तथा चाह मूलटीकाकारः— सर्वप्रदेशपर्यन्तवर्त्तित्वात् त्वचोऽभ्यन्तरेऽपि शुषिरस्य उपरि त्वगिन्द्रियस्य भावाद् उपपद्यते अन्तः शीतस्पर्शवेदनानुभवः "

इन्द्रियाणां पृथुता—

सोतिंदिए ण भंते ! केवइय पोहत्तेण ? गोयमा ! अंगुलस्स असंखेज्जभागे पोहत्तेण, एवं चक्खिदिए वि, घाणिंदिए वि, जिब्भिदिए ण पुच्छा ? गोयमा ! अंगुलपुहुत्तेण पण्णत्ते. फासिंदिए ण पुच्छा ? गोयमा ! सरीरप्पमाणमेत्ते पोहत्तेणं पन्नत्ते "

इन्द्रियाणां कियत्परमाणुमयत्वम्—

सोतिंदिए ण भंते ! कतिपदेसिते ? गोयमा ! अणंत-पदेसिते—एव जाव फासिंदिए-( सर्वेषामपि इन्द्रियाणां-अनन्तप्रदेश ( परमाणुमयत्वम् " )

इन्द्रियाणि शरीरान्तरेव स्थित्वा कियन्त गगनाभोगम् -आभियन्ते ? तदाह—

" सोइदिए ण भंते ! कतिपदेसोगाढे ? गोयमा ! असखेज्जपएसोगाढे पणत्ते एव जाव फासिंदिए-( पञ्चाऽपि इन्द्रियाणि शरीरान्तरेव असख्येयान् गगनप्रदेशान् स्वस्थित्या समाच्छादयन्ति ) " समानेऽपि सर्वेषामिन्द्रियाणा गगनभागा-वगाहित्वे अय विशेष:—" चक्षुरिन्द्रिय हि असख्येयानपि सर्व-स्तोकान् गगनभागान् अवगाहते तत चक्षुरिन्द्रियात् अधि कानपि गगनभागान् श्रोत्रेन्द्रिय समावृणोति, तत श्रोत्रेन्द्रि यात् अधिकतरानपि गगनप्रदेशान् घ्राणेन्द्रिय समाच्छादयति, तत घ्राणात् अधिकतमानपि आकाशप्रदेशान् जिह्वा-इन्द्रिय समवगाहत ततोऽपि समधिकतरान् गगनभागान् स्पर्शेन्द्रिय समावृतान् करोति " अर्थात्-सर्वेभ्यो महत्तमम् इन्द्रिय स्पर्शे न्द्रियम्, ततो न्यून (लघु-सूक्ष्मम्) जिह्वा-इन्द्रियम्, ततो न्यून घ्राणम्, ततोऽपि न्यून श्रोत्रम्, ततोऽपि न्यूनम् नेत्रम्-नेत्र तु सर्वत एव न्यूनतमम्

इन्द्रियगतपरमाणूना स्पर्शविचार —

" चक्षुरिन्द्रिये सर्वस्तोका कर्कशता, गुरुता च, तत. समधिका श्रोत्रे, ततोऽपि समधिकतरा घ्राणे, तत समधिकतमा रसनायाम्, सर्वेभ्य' समधिका स्पर्श-इन्द्रिये " स्पर्शेन्द्रिये सर्वस्तोके मृदुत्व-लघुत्वे, तत' समधिके ते रसनायाम्, ततोऽपि ते अधिके घ्राणे, ततः समधिके श्रोत्रे, ततोऽपि अधिकतरे नेत्रे

अर्थात्–नेत्र मनतोऽपि मृदु, लघु च, स्पर्शेन्द्रियं तु सर्वत कर्कशम्, गुरु च. "

इन्द्रियाणा विषयग्रहणपद्धतिः—

" पुट्ठाइ भंते ! सद्दाइ सुणेति ? अपुट्ठाइ सद्दाइ सुणेति ? गोयमा ! पुट्ठाइ सद्दाइ सुणेति, नो अपुट्ठाइ सद्दाइ सुणेति, पुट्ठाइ भंते ! रूवाइ पासति ? अपुट्ठाइ पासति ? गोयमा ! नो पुट्ठाइ रूवाइ पासति, अपुट्ठाइ रूवाइ पासति–( एव ) गधाइ पुट्ठाइ अग्घाइ, नो अपुट्ठाइ. रसाइ पुट्ठाइ अस्साएइ, नो अपुट्ठाइ, फासाइ पुट्ठाइ पडिसवेदेइ नो अपुट्ठाइ—पविट्ठाइ सद्दाइ सुणेति नो अपविट्ठाइ सद्दाइ सुणेति—एव जहा पुट्ठाणि तहा पविट्ठाणि वि "

इन्द्रियाणा कियतो दूरात् विषयग्रहणम् ?–

" सोतेंदियस्स ण भंते ! केवतिए विसए पण्णत्ते ? गोयमा ! जहण्णेण अगुलस्स असखेज्जभागेण, उक्कोसेण बारसहिं जोअणेहितो अविच्छिण्णे पोग्गले पुट्ठे पविट्ठाइ सद्दाइ सुणेति, चक्खिदियस्स ण भंते ! केवतिए विसए पण्णत्ते ? गोयमा ! जहण्णेण अगुलस्स असखेज्जभागेण, उक्कोसेण सातिरेगाओ जोयणसयसहस्साओ अच्छिण्णे पोग्गले अपुट्ठे अपविट्ठाइ रूवाइ पासइ, घाणिंदियस्स पुच्छा ? गोयमा ! जहण्णेण अगुलस्स असखेज्जभागेण, उक्कोसेण नवहिं जोयणहिंतो अच्छिण्णे पोग्गले पुट्ठे पविट्ठाइ गधाइ अग्घाइ, एव–जिब्भिंदियस्स वि, फासिंदियस्स वि "

अत्र तावद् इन्द्रियाणा विषयग्रहणपद्धता मतान्तराणि–

सर्वाणि इन्द्रियाणि प्राप्यकारीणि अर्थात्–इन्द्रिय–विषयो' सस्पर्शद्वारेणैव विषयग्राहीणि इति मतम्—कणभक्ष–अक्षपाद–मीमांसक–सांख्यप्रावचनिकप्रवराणाम्

चक्षुः, श्रोत्र च इन्द्रिय विना अन्यानि श्रीणि प्राप्यकारीणि, चक्षु श्रोत्रे तु अप्राप्यकारिणी अर्थात् विषयसस्पर्शमन्तरेण तद्बोधविधायिनी इति मतम्–तथागततार्किकगुरूणाम्,

जैनतार्किकाणा तु मतम्—पूर्वं " पुट्ठ सुणेइ सद्द, रूव पुण पासइ अपुट्ठ तु " इत्यादिना दर्शितमेव. अर्थात् जैनतर्कणानुसारेण—चक्षु. मनश्च अप्राप्यकारि, अन्यानि सर्वाणि प्राप्यकारीणि–इति

अत्र विपुले मतभेद कतरद् मत श्रेय. ? इति प्रश्नप्रतिवचनम्–त एव दातुमलमविष्णव –ये शरीरशास्त्रान्तर्गत–इन्द्रियविद्याविशारदा आधुनिका वैज्ञानिका , प्राचीना वा शरीर–इन्द्रिय–मानसशास्त्रप्रवणाः पण्डिता

इति इन्द्रियाणि निरूपितानि, अधुना तत्प्रवर मनो निरूपणीयम्, तत्स्वरूपमेवम्—मनो हि द्विविधम्–द्रव्यरूपम्, भावरूप च. मननरूपम् आत्मस्पन्दरूप मनो भावरूपम् परमाणुरूप यद् मन. तद् द्रव्यरूपम्. तथाहि—मानसा हि परमाणव समग्रगगने समृद्य समृद्य भृता इव तिष्ठन्ति, ते च विचारप्रवृत्तस्य आत्मन विषय ग्रहणे इन्द्रियाणि इव सहायताकारिणः–विचारको हि विचार कुर्वन् विचारानुरूपान् मनस परमाणून् क्षणे क्षणे आदत्ते, निसृजति च जैनपरिभाषया ते परमाणव ' मनोवर्गणा ' नाम्ना प्रतीता.—ते च जडत्वेन पुद्गलपरिणामित्वेन च मूर्ता., रूप-रस-गन्ध-स्पर्श-शब्दवन्तः जडपुद्गलसमानधर्मिणश्च मम्रशरीरेण शीताऽऽतपादेरनुभवस्य आबालगोपालप्रतीतत्वात् मनो हि शरीरव्यापि सर्वेन्द्रियसहायक च इति जैनतर्कणा

मनो हि अणुतमम्, हृदयैकदेशवर्ति च–इति अन्येषा तर्कणा, तथागततर्कणा तु नावगता

एव तर्कणाद्वयमध्ये का प्रमाणीभूता ? इति मानसशास्त्रिणो गम्भीरदृश , योगिनश्च एव परिप्रष्टव्यास्तथ्यगवेषणपरैः। एव सापेक्षबुद्ध्या पदे पदे अपेक्ष्यमाणानि इन्द्रियाणि मनश्च संक्षिप्तमत्र निरूपितानि. विस्तरार्थिभिर्विशेषार्थिभिश्च ते ते प्राचीना आम्नायाः, तदभ्यासिनः, तदनुभविनश्च आप्ता· पर्युपास्या इति—सापेक्षा बुद्धिः.

अथ निवरणे एव निरपेक्षा बुद्धिं स्वरूपत आविर्भावयन्नाह—

या तु बुद्धिः इन्द्रिय-मनोनिरपेक्षा—केवल स्वाधारमात्मानमेव अपेक्षमाणा—अन्य च कचिद् अपि न प्रतीक्षमाणा बुद्धिः सा निरपेक्षा.

सा चैकापि तदावरणतारतम्येन त्रिधा. तथाहि—अवधिज्ञानरूपा, मन पर्यायरूपा, केवलज्ञानरूपा च.

तत्रापि अवधि-मनःपर्यायरूपबुद्धिद्वय हि तदाधार-आत्मविकासतारतम्येन अनेकधा दर्शित शास्त्रकारैः ।

रूपवन्ति एव वस्तूनि प्रत्यक्षयन्ती अवधिबुद्धिस्तदाधाराणां अनेकविधवैचित्र्येण अनेकधा विचित्रा.

केवल मानसान् अणून् प्रत्यक्षमानयन्ती मनःपर्यायबुद्धिरपि तदाधारतरतमतया विविधा.

या तु केवलज्ञानबुद्धि सा अनवरणत्वेन सर्वत्र समानकारणत्वेन च सर्वेषु आत्मसु उत्पद्यमाना एकरूपैव—न विविधा न्यूनाधिका वा—तद्विषयश्च सर्व वस्तु—नास्ति तत् किंचिद् जगत्त्रये यत् स्यात् तदविषय —सर्वासु बुद्धिषु एषा एकैव निरपेक्षा बुद्धिः केवलम् औदासीन्यमस्थापिनी—उपेक्षाविशा-

यिनी, अन्याश्च वा बुद्धय. प्रवृत्तिप्रभृतिक वस्त्रय यथोचिततया आविष्कुर्वन्ति आत्मनि–यदत्र निरपेक्षबुद्धित्रय प्ररूपित तदेव शिष्यशासनानुरूप निस्तारमानीय भगवता पतञ्जलिना महर्षिणा स्वयोगानुशासने 'अतीतानागतज्ञान' 'सर्वभूतरुतज्ञान' 'पूर्वजातिज्ञान' 'परचित्तज्ञान'–'सर्वज्ञातृत्व' प्रभृतिशब्दौघेन निरदेशि विभूतिपादे विभूतिरूपतया–अतस्तद्व्याख्याविशेषविस्तरो ग्राह्यो जिघृक्षुणा तत्तत्शास्त्रान्तरात् इति निरपेक्षा बुद्धि

( अत्राक्षेप-परिहारौ )

ननु भो ! नवीनग्रन्थकार ! किमेव त्वम् एकरूपमेव प्रमाण प्रलपसि ? त्वत्त प्राचीना त्वत्सम्मानितचरणयुगलाश्च जैनाचार्या, अन्ये च महर्षय प्रमाणसरत्या यथा मरूयातव न्तस्तथा त्व कथ नाऽकार्षी ?

तथाहि—अनुयोगद्वारसूत्र एव केनचित जैनसूरिणा प्रमाणभूरित्वमेव प्रभाषितम्—

"नाणगुणप्पमाणे चउव्विह पण्णत्ते त जहा—पच्चक्खे, अणुमाण, ओवम्म, आगमे. × पच्चक्खे दुविहे पण्णत्ते × इदि अपच्चक्खे अ, नोइदियपचक्ख अ × अणुमाणे तिविहे पण्णत्ते × पुव्वव, सेसव, दिट्ठमाहम्मव, ओवम्मे दुविहे पण्णत्ते × साहम्मोवणीए अ वेहम्मोवणीए अ. ( ते द्वे अपि त्रिविधे त्रिविधे प्रज्ञप्ते ) आगमे दुविहे पण्णत्ते × लोइए अ, लोउत्तरिए अ ( लोइए ) भारह, रामायण जाव चत्तारि वेआ सगोवगा (लोउत्तरिए) दुवालसग गणिपिडग आयारो जाव दिट्ठिवाओ"

स्याद्वादरत्नाकरे श्रीदेवसूरिपादा प्रमाणविषये एवमाहु —

" तत् (प्रमाणम्) द्विभेदम्–प्रत्यक्ष च परोक्ष च तद् (प्रत्यक्षम्) द्विप्रकारम्–साव्यवहारिकम् पारमार्थिक च तत्राद्य

( सान्यन० ) द्विविधम्–इन्द्रियनिबन्धनम्, अनिन्द्रियनिबन्धन च. तद् द्वितयमपि ( अवग्रहादिभेदेन ) चतुर्विकल्पम्. पारमार्थिक × सकल विकल च × विकलम्–अवधिज्ञान–मनःपर्यायज्ञानरूपतया द्वेधा. × सकल केवलज्ञानम्. स्मरण-प्रत्यभिज्ञान–तर्क–अनुमान–आगमभेदत' तत् ( परोक्षम् ) पञ्चप्रकारम्. आगम. × द्वेधा लौकिको लोकोत्तरश्च–"

तथा मतिरष्टाविंशतिधा, श्रुतं चतुर्दशधा, इत्याद्यनेकप्रकारा प्रमाणप्रमिति' इति जैनी प्रमाणगणना.

" प्रत्यक्ष–अनुमान–उपमान–आगमाः प्रमाणानि " इति न्याय–विशेषविदो.

" प्रत्यक्ष–अनुमान–आगमा. " इति साख्य–योगो

"प्रत्यक्ष–अनुमान–उपमान–आगम–अर्थापत्ति–अभावाः " इति मीमासक–वेदान्तिनो.

" प्रत्यक्ष–अनुमान–उपमान–आगम–अर्थापत्ति–अभाव–सभव–ऐतिह्यानि " इति ज्योतिर्विद' पौराणिकाश्च

" तान्येव चेष्टा–समधिकानि नव प्रमाणानि " इति तन्त्रतन्त्रिण'–इत्येव प्रकारेण प्रमाणस्य नानारूपतायामपि निरूपिताया तैस्तैर्विद्वद्भिः. किमेव त्वं तदेकरूपमेव सूत्रयसि–किं त्व तेभ्योऽपि दक्षमन्योऽसि–ब्रूहि भो ! ( इत्याक्षेपः )

महाशय ! शृणु–यथाहि व्यवहारप्रवरा. कस्मैचिद् एकस्मिन् रूप्यके दातव्ये रूप्यकमेव ददते, कस्मैचिद् तदर्धद्वयं ददते, कस्मैचिद् तच्चतुष्टय प्रयच्छन्ति, कस्मैचिद् तदष्टभागान् सप्रयच्छन्ति, कस्मैचिद् तत्षोडशभागान् सप्रयच्छन्ति, कस्मैचिद् तद्द्वात्रिंशद्भागान् विभजन्ते, कस्मैचिद् तच्चतुष्षष्टिकभागान् सप्रददते, कस्मैचित्तु तद्द्विनवत्यधिकशतभागानपि स-

प्रयच्छन्ति–परन्तु न तत्र कस्यचिद् दायकस्य ग्राहकस्य च कदाचिदपि जायमानो विवादलेशोऽपि दृष्ट', श्रुतो वा–केवल यथा व्यवहारानुकूल्य तथा तेषा दायक–ग्राहकाणा प्रवृत्ति•, सा च यथा प्रशस्यतमा तथैव जिज्ञासुजनानुकूलतया एकधा, द्विधा, त्रिधा, चतुर्धा, षोढा, अष्टधा, नवधा–ततोऽपि अनेकधा प्रमाणनिरूपणविधान न दूषणावहम्, किन्तु विस्तररुचिजिज्ञासुचित्तानुकूल्येन संक्षिप्तरुचिशिष्यचित्तानुरञ्जनतया च तत्सर्वमपि निरूपण भूमिकापेक्षया सर्वेषामेव अधिकारानुरूप उपयोगि एव नात केनापि प्रामाणिकेन तद्भेदोपभेदखण्डन-मण्डनाय प्रयासो विधेय', नाऽपि लाघव–गौरवे च सदर्य शब्दाशब्दि दूषणादूषणि च योद्धव्यम्–यैश्च सम्प्रदायनिमूढै' प्राचीनार्वाचीनै जैन–जैनेतरैः तद् युद्ध विधाय अद्यावधि थूत्कृतम्–तत् तेषा थूत्कृतमेव–जिनाज्ञादूषकम्• (इति परिहारः) किमधिकेन ?

एतदेव सर्यते महावादिवच'—

" प्रसिद्धानि प्रमाणानि व्यवहारश्च तत्कृत' ।
प्रमाणलक्षणस्योक्तौ ज्ञायते न प्रयोजनम् "

इति प्रमाणनिरूपणे प्रथम प्रमाणकाण्डम्



## निरूपिते प्रमाणे अधुना नयाः प्रस्तूयन्ते—

प्रमाणं हि निश्चायकम्, नयास्तु नायकाः-प्रेरकाः-प्रापकाः-प्रवर्तका इति तयोर्द्वयोरपि समाने चित्ताभिप्रायरूपत्वेऽपि क्रियाविशेषात् वैशिष्ट्यम्-इति प्रमाणात् नयं विभज्य नयं व्युत्पादयति—

**नयति प्रमाणसगृहीतं बोधं व्यवहारम्-इति नयः ॥१॥**

नयति-प्रेरयति, प्रापयति, प्रवर्तयति च-इति नार्थान्तरम्. नयति हि द्विकर्मा-अत्र च 'बोधम्' इति गौणं कर्म, 'व्यवहारम्' इति च मुख्यम्. तस्यैव (व्यवहारस्य) नयतेः मुख्यसंसर्गात्. पूर्वोक्तेन प्रमाणेन सगृहीतो बोधः नहि एकेनैव समयेन युगपद् व्यवहारपथं प्रापयितुं शक्यः, किन्तु यथाकालं अर्थक्रियाकरव्यवहारानुकूलतया तदंशा एव (बोधांशा एव) व्यवहारमार्गं नेतुं शक्याः-यश्च तदंशानाम् नायकः-नयनविधायी स एव वक्तुरभिप्रायविशेषो नयः ।

उदाहरणेन च नयं स्पष्टयति-यथाहि एक एव मनुष्यः प्रमाणपुरस्सरं कस्यचित् पितृत्वेन, कस्यचित् पितृव्यत्वेन, कस्यचित् पितामहत्वेन, कस्यचित् मातुलत्वेन, कस्यचित् पितृष्वसृस्वामित्वेन, कस्यचित् मातृष्वसृपतित्वेन, कस्यचित् श्वसुरत्वेन, कस्यचित् जामातृत्वेन, कस्यचित् भागिनेयत्वेन केनचित् एकेन प्रमात्रा ज्ञातः, स च प्रमाता यद्यपि तत्पुरुषविषये तान् सर्वानपि संबंधान् प्रवृत्ति-निवृत्तिनिश्चायिना प्रमाणेन अवबुद्धवान्-किंतु न हि तान् एकस्मिन् एव समये स्थले वा स प्रमाता उपयोक्तुमलं भवेत्-यदा च तस्य पुरुषस्य चैत्र-पितृत्वेन प्रमातुः प्रयोजनम् तदा प्रमाता प्रमाणसगृहीतसर्वसम्बन्धबोधान् हृदयगतानपि गौणान् कृत्वा पितृनयेन

पितृसम्बन्धमाविष्कृत्य प्रकटीकरोति ' अयमस्ति चैत्रपिता ' इति। एतत्प्रकटीकरणसमये न हि प्रमाता तान् पितृव्यतिरिक्तान् सबन्धान् विसरति निषेधति च किन्तु हृदयगतप्रमाणसगृहीतबोधेषु यो बोधो यदा, यत्र, यथा वा अर्थक्रियाकारी त तदा, तत्र, तथा प्रयुज्य, अन्यांश्च गौणीकृत्य प्रवर्तमानस्तेन व्यवहारसाधकनयेन प्रमेय समादत्ते, प्रमेयात् निवर्तते, उदास्ते च-नयो हि रीति-अपरनामा व्यवहारसाधक'-व्यवहारमार्गानुसारी चित्ताभिप्रायविशेष -एवमेव तस्यैव पुरुषस्य यदा मोहनदासमातुलत्वेन प्राप्ते प्रयोजने तेन मातुलनयेन अन्यान् सम्बन्धानुपसृज्य प्रमाता आविष्करोति ' अयमस्ति स एव मोहनदासमातुल '-एव चैव-चित्तरञ्जनश्वसुरत्वेन आगते प्रयोजने प्रमाता तमेव पुरुष प्रख्यापयति ' अयमस्ति स एव चित्तरञ्जनश्वसुर ' अनेनैव प्रकारेण अत्र उदाहरणे अन्यत्र च सर्वत्र लौकिक-लोकोत्तरव्यवहारमभारे नेतव्या इयमेव नयव्याख्या

नयमेव सख्याति—

व्यवहाराणामसख्येयत्वेन नया अपि असख्याः ॥२॥

सर्वे व्यवहारा हि सापेक्षा' सन्त परस्पर सघटामटन्ति, ते च तादृशा एव लौकिक-लोकोत्तरकार्यसाधकाः स्यु -ते च निखिला अपि सभूय लौकिकीं सख्यामतिक्रामन्ति अत एव व्यवहारसाधकनया अपि सख्यारहिता सख्याता' सख्यावद्भि.॰

तथा च महावादी स्वतन्त्रविचारचण श्रीसिद्धसेन-भट्टारकः—

" जावइया वयणपहा तावइया चेव हुति नयवाया ।
जावइया नयवाया तावइया चेव परसमया " ॥४७॥

एव संख्यातीतानपि नयान् समुच्चित्य सगृह्णाति ग्रन्थकृत्—

ते च द्विधा ॥ ३ ॥

पदार्थाः हि निखिला समुचिताः सन्तो द्वित्व एव निविशन्ते–पदार्थाः, पदार्थधर्माश्च इति । यद्यपि पदार्थ–पदार्थधर्मोणा सत्यपि समभिन्नत्वे लोके क्वचित् प्रधानतया पदार्थस्य व्यवहार, क्वचिच्च प्रधानतया तदभिन्नतद्धर्मव्यवहार'–एव द्वयोरपि व्यवहारयोः निजनिजभूमिकया प्रधानत्वनिवन्धनेन तत्साधकनयानामपि द्वित्व समुपकल्पित त' तः शास्त्रविशारदैः–इति नयाना द्वित्व ससिद्धिसौधसमारूढम्.

नामतो द्वित्वमाह—

द्रव्यार्थिकः धर्मार्थिकश्च ॥ ४ ॥

एको हि वचनव्यवहार' स्वकार्यसाधनाया द्रव्यमेव प्रमुखतया समवलम्बते–तद्धर्मास्तु समुपसृजति यथा च अयम् आत्मा, एतद् जडम्, पुद्गल वा ।

अन्यश्च वाग्व्यवहारः स्वकार्यसिद्धौ द्रव्यधर्मानेव मुख्यभावेन भजते तद्धर्माधार द्रव्य तु स्वव्यवहारक्रोडीकरोति–यथा च अयम् आत्मा नित्यानित्यः, एतत् पुद्गल निर्जीवजलरूपम्, शीतलम्, स्निग्ध वा

नयाना व्यवहारानुगामित्वेन, तत्साधकत्वेन च संख्यातीतत्वेऽपि अस्मिन्नेव नामयुगले–अन्तर्भावः सुकरः सुज्ञानश्च. द्रव्याणि अर्थयते–व्यवहारसिद्धौ अभिलषति इति द्रव्यार्थिक सकलद्रव्यविषयकव्यवहारनेता । धर्माश्च द्विधा–केचन द्रव्यसहजाः गुणापरनामख्याताः, केचन द्रव्ये क्रमेणैवाऽऽविर्भविष्णवः

पर्याय-पदप्रसिद्धाः तयार्द्वयोरपि अत्र नये संग्रहाय धर्मान् अर्थयते व्यवहारसाधनतया इति धर्मार्थिक –अत्र 'धर्मार्थिक' पदेनैव गुणार्थिक-पर्यायार्थिकपदयोः सुसंग्रहाद् न तद्भेदविधान लेखविषय नीतम्–तत्सुस्पष्टीकरणाय च 'धर्म' शब्दस्यैव विशदा विपुला च व्याख्या व्याख्याता

शब्दोऽपि ॥ ५ ॥

व्यवहाराणा उचितत्वात् तेषु केचिद् व्यवहारा यथा पदार्थान् तद्धर्मांश्च समवलम्बन्त, तथा केचिद् व्यवहारा नार्थविषया.–न धर्मविषया –किन्तु केवलम् अङ्गीकृतार्थशब्दविषया एव. यथा पाको भविष्यति, सारथिर्गत', नैतद् वर्तते रामराज्यम् -तेषा शब्दविषयाणा व्यवहाराणा नयनार्थमयम् शब्दोऽपि नयः–प्रवृत्त शब्द–नाम्नैव प्रख्यात । यद्यपि श्रोता पदार्थ-पदार्थधर्मप्रवणमेव शब्द शृणोति, वक्ताऽपि च तथाप्रकारमेव वक्ति इति–अस्यापि शब्दनयस्य द्रव्यार्थिक–धर्मार्थिकयोरेव निवेशन समुचितम्, किंतु व्यवहारे क्वचित् क्वचित् कदाचित् शब्दव्यवहारस्यापि प्रधानतासमीक्षणेन अयम् मुख्यनयकक्षयां त' भूतः शब्दोऽपि नया ग्रन्थकृता पृथगुल्लिखता नीत इति

एष्वेव त्रिषु नयेषु सप्तानामपि नयानाम् तेषा सप्तशत्या वा समावेश सुबोध. । तथाहि–नैकगमो नैगमो धर्मिणमव लम्बमान द्रव्यार्थिके, धर्मम्, धर्मान् वा समाश्रितो धर्मार्थिके निविशते

वस्तुगतपराऽपरसामान्य भजमान पराऽपरनामविशिष्ट संग्रहो धर्मार्थिक एव स्वतनु सधत्ते

धर्मान् धर्मिणश्च सधारयन् व्यवहारप्रवणो व्यवहारनय' यथायोग मुख्यनयान्यतरकनय स्वात्मान नयति.

ऋजुसूत्रो हि ऋजु एव सूत्रयन्–वर्तमानतामेव समपेक्षमाण' धर्माथिक एव नये स्वात्मान योजयति.

समानार्थेषु अपि शब्देषु निरुक्तभेदाद् वाग्व्यवहारमाश्रित्य भिन्नमर्थं समभिरोहन् समभिरूढोऽपि नय न शब्दनयात् स्वात्मान भिन्न शब्दाययितु शक्तः

शब्दाना निजनिजप्रवृत्तिनिमित्तभूतक्रियायुक्तमर्थमाभिभाजयन् एवभूतोऽपि नयः शब्दनयशरीरे एव अन्तर्भवति, एव ग्रन्थान्तरे विस्तरेण व्याख्याता एते सप्ताऽपि नया अत्र नयत्रये एव समीकृता

किंच, एवमेव क्रियाप्रधान क्रियानयः, विधिप्रधानो विधिनयः, निषेधप्रधानो निषेधनय', ज्ञानप्रवणो ज्ञाननयः, गुणप्रवणो गुणनयः–एव रीत्या नैके नया स्वनेयापेक्षया अत्र नयत्रये एव प्रविशन्ति–इति

स्वनेय नयन्तः, अन्यनेय समुपेक्षमाणा एते शमभृतः।
श्रीरत्नप्रभसूरयोऽपि चैतदेव समृदुः—

"नि शेषांशजुषा प्रमाणविषयीभूय समासेदुषा
वस्तूना नियतांशकल्पनपराः सप्त श्रुतासङ्गिनः।
औदासीन्यपरायणास्तदपरे चांशे भवेयुर्नया
श्चेदेकान्तकलङ्कपङ्ककलुषास्ते स्युस्तदा दुर्नयाः" ॥

"अहो ! चित्र चित्र तव चरितमेतन्मुनिपते !
स्वकीयानामेषा विविधविषयव्याप्तिवशिनाम् ।
विपक्षाऽपेक्षाणां कथयसि नयाना सुनयता
विपक्षक्षेप्तॄणां पुनरिह विभो ! दुष्टनयताम् ॥

" सव्वे सरा निअट्टति तक्का जत्थ न विज्जति "

मई तत्थ न गाहिता-ओए उवमा न विज्जति-अरूवी सत्ता-अपयस्स पय नत्थि से न सद्दे, न रूवे, न गधे, न रसे, न फासे त्ति बेमि " इति अपरिस्पन्दी आत्मा, तत्स्वरूपविशेषार्थिना तु श्रीज्ञातनन्दन-शाक्यनन्दनयोश्चर्या यथायथ सूक्ष्मदृष्ट्याऽवलोकनीया इति

अथ 'स एव देहस्थितः प्रमाता ' इतिसूत्रखण्ड मण्डयन्नाह—

देहस्थित आत्मा परिस्पन्दी, अपरिस्पन्दी चेति द्विधा ॥ २ ॥

तत्र योऽपरिस्पन्दी-स सर्व सम्रुपेचमाणो ज्ञातनन्दनवत् सचरति-तत्स्वरूप च प्रागुक्तवदेव अवमेयम्

इदानीं तु परिस्पन्दिन त दर्शयति—

यद्यपि आत्मा स्वरूपतोऽपरिस्पन्दी, स्वरूपस्थायी च, तथापि तस्य तादृशस्यापि मोहजनिचित्रसस्कारचक्रवशेन मद्यपवत् स्वरूपव्यामोहे सूक्ष्मेतरदेहससर्ग, सति च देहससर्गे तत् सस्कारचक्रम् सुदृढम्, ततश्च देहादिससर्गोऽपि सुदृढतम –तत एव देहाध्यास' 'यथा अह देहस्वरूप'-परिस्पन्दी, न तु अपरिस्पन्दी देहेतर आत्मरूपः, ' सत्या च तादृशि भ्रान्तौ धनाध्यास', भार्याध्यास, पुत्राध्यास., परिवाराध्यास, विविधधर्माद्यनेकसप्रदायाध्यास', जडाध्यासश्च–तत एव च ससारावस्थानम्-अनन्तकाल ससारससरण च, एते परिस्पन्दिन एव अत्र प्रमातृपदेन विवक्षिता -तेषा तादृशामेव शास्त्रादशरणप्रयोजनत्वात् इति

अत्र विवक्षितेषु प्रमातृपदवाच्येषु सर्वेष्वपि आत्मवि-शुद्धिजन्यतारतम्येन प्रमातृविशुद्धितरतमता अववोध्या, यद्यपि देहस्थिताः सर्वेऽपि परिस्पन्दिनः आत्मानः प्रमातृकोटिं प्रविष्टा अपि तेषु आत्मविशुद्धिप्रकर्षजन्यो विशेषोऽवबोध्य एव इति हृदयम्.

अत्र प्रमातृविषये आक्षेप–परिहारौ—

अयम् आत्मरूपः प्रमाता केवलम् अनुभूतिविषयः– वेदान्ता अपि एनम्–' यतो वाचो निवर्तन्ते ' ' तत्र तत्र ' इत्यादिना च अनुभूतिविषयमेव आहु. जिनागमा अपि ' सव्वे सरा निअट्टन्ति ' ' तक्का जत्थ न विज्जइ ' इत्यादिना च त तादृशमेव समर्थयाचक्रुः–अत एव नाय शब्दगम्यः, शास्त्रगम्यः, तर्कगम्यश्च तत एव च अत्र विषये बहूनि मतान्तराणि सजातानि केचित्तु त देहरूपमेव नश्वर मन्यते. अपरे–अर्वाचीनास्तथागतपथजीनिनस्त क्षणनश्वर स्वीकुर्वते, अन्ये सांख्यास्त अकर्तारम्, भोक्तार च मन्यन्ते, अपरे त व्यापक विदन्ति, जैनास्तु त परिस्पन्दिनम्, देहव्यापिन, कर्मकर्त्तारम्, कर्मभोक्तार च चिन्वते अत्र अस्य अनुभवविषयत्वेनैव कतरत् मत श्रेय., सत्य च इति निर्णेतुमसुकरम्. तथापि तार्किकपद्धत्या तर्करुचिजिज्ञासुप्रीत्यर्थमेव अत्र किंचित् चर्च्यते

आक्षेप —

" अदृश्यत्वादरूपित्वाज्जीवो नास्त्येव भेदभाक् ।
अनुभूतेरगम्यत्वान्नृशृङ्गस्येव केवलम् ॥ ४५ ॥
देह एव वा जीवोऽस्ति प्राणरूपोऽथवा च सः ।
इन्द्रियात्मा मनोरूपो नैव भिन्नो ह्यलक्षणः ॥ ४६ ॥

यदि स्याद् भेदवान् जीवोऽनुभूयेत कथं न हि ।
यदस्ति सकलं तत् तु ज्ञायते कच-कायवत् ॥ ४७ ॥
अरेऽतो नैव आत्माऽस्ति ततो मुक्तिप्रथा वृथा ।
एनामाभ्यन्तरीं रेकाम् उत्कीलय प्रभो ! प्रभो ! " ॥४८॥

परिहार —

अध्यासाद् भासिता देह-देहिनो' समता न सा ।
तयोर्द्वयोः सुभिन्नत्वाद्भ्रघर्षे प्रकटैरहो ! ॥ ४६ ॥
अध्यासाद् भासिता देह-देहिनो समता न सा ।
तयोर्द्वयो' सुभिन्नत्वादसिकोशायितौ हि तौ ॥ ५० ॥
दृष्टेर्द्रष्टाऽस्ति यो वेत्ति रूपं सर्वप्रकारगम् ।
भात्यस्याध्याऽनुभूतिर्या साऽस्ति जीवस्वरूपिका ॥ ५१ ॥
स्वस्वविषये सज्ज्ञानं प्रतीन्द्रियं विभाति भो ! ।
परंतु तेषां सर्वेषां जागर्ति भानमात्मनि ॥ ५२ ॥
न तद् जानाति देहोऽस्य नैव प्राणा न चेन्द्रियम् ।
सत्तया देहिनो देहे, तत्प्रवृत्तिं निबोध रे ! ॥ ५३ ॥

[ तत्प्रवृत्तिम्-देहप्रवृत्तिम्-यदि न स्याद् देहे आत्मा, तत' सोऽपि ( देहोऽपि ) कथं प्रवृत्तिं विधातुं शक्नुयात्-इति वचनम् ]

योऽवस्थासु समस्तासु ज्ञायते भेदभाक् सदा ।
चेतनतामय स्पष्ट. स ह्यात्मा नान्यलक्षणः ॥ ५४ ॥
घटादिसर्वं जानासि अतस्तन्मन्यते शिशो ! ।
तं न जानासि ज्ञातारम् तद्ज्ञानं ब्रूहि कीदृशम् ॥ ५५ ॥
कृशे देहे घना बुद्धिरघना स्थूलविग्रहे ।
स्याद् देहो यदि आत्मैव नैवं तु घटना भवेत् ॥ ५६ ॥
केवलं भिन्न एवास्ति स्वभावो जड-जीवयोः ।

१ विग्रह —शरीरम्–स्थूले शरीरे ।

कदापि न तयोरैक्यम् द्वैत कालत्रिके तयो ॥ ५७ ॥
आत्मान शङ्कते आत्मा स्वयमजानतो ध्रुवम् ।
यः शङ्कते स वै आत्मा स्वेनाहो ! स्वीयशङ्कनम् " ॥५८॥

आक्षेप'—

" शिष्ये भगवता प्रोक्ता आत्मास्तित्वस्य युक्तय' ।
तत सम्भवन तस्य ज्ञायतेऽन्तर्विचारणात ॥ ५६ ॥
तथाऽपि तत्र शङ्काऽऽत्मा नश्वरः, नाऽविनश्वर ।
देहसयोगजन्मास्ति देहनाशात् तु नाशभाक् ॥ ६० ॥
अथवा क्षणिक यस्तु परिणामि प्रतिक्षणम् ।
तदनुभवगम्यत्वान्नात्मा नित्योऽनुभूयते " ॥ ६१ ॥

परिहार'—

देहमात्र तु सयोगि दृश्य रूपि जड घनम् ।
जीवोत्पत्ति-लयावत्र नीतौ केनानुभूतिताम् ? ॥ ६२ ॥
उत्पत्ति-लययोर्बोधो तु यस्यानुभववर्तिनौ ।
स ततो भिन्न एव स्याद् नान्यथा बोधन तयोः ॥ ६३ ॥
दृश्यन्ते ये तु सयोगा ज्ञायन्ते ते सदात्मना ।
नात्मा सयोगजन्योऽत, किन्त्वात्मा शाश्वतः स्फुटम् ॥६४॥
जडादुत्पद्यते जीवो जीवादुत्पद्यते जडम् ।
एषाऽनुभूति कस्यापि कदापि क्वापि नैव रे ! ॥ ६५ ॥
यस्योत्पत्तिस्तु केभ्योऽपि सयोगेभ्यो न जायते ।
न नाशः सभवेत् तस्य जीवोऽतो ध्रुवति ध्रुवम् ॥ ६६ ॥
क्रोधादितारतम्य यत् सर्प-सिंहादिजन्तुषु ।
पूर्वजन्मजसस्कारात् तत् ततो जीवनित्यता ॥ ६७ ॥
आत्माऽस्ति द्रव्यतो नित्यः पर्याये परिणामभाक् ।
बालादिवयसो ज्ञान यसादेकस्य जायते ॥ ६८ ॥

क्षणिक वस्त्विति ज्ञात्वा य क्षणिक वदेदहो ! ।
स वक्ता क्षणिको नास्ति तदनुभवनिश्चितम् ॥ ६६ ॥

[ यदि वक्ता ( आत्मा ) क्षणिक स्यात् तदा पूर्वं ज्ञात्वा पश्चात् स एव वक्तु कथ शक्नुयात् इति तत्त्वम् ]

कदापि कस्यचिन्नाशो वस्तुनो नव केवलम् ।
चेन्नश्येत् चेतना सा तु कामवस्था समाश्रयेत् ? ॥ ७० ॥

[ पूर्वार्धे तु स्पष्टम् । उत्तरार्धे तु—यदि चेतनाऽपि घटवद् नाश प्राप्नुयात् तदा यथा घटखण्डानि पार्थिवदशा समाश्रयन्ति, वा निमित्तवशत परिणामान्तरमपि प्राप्नुवन्ति तथा चेतनाऽपि नश्यन्ती का दशा यायात् केषु वा अणुषु मीलेत् ?—इति तत्त्वम् उत्तर तु- चेतना जडताऽत्यन्त भिन्नत्वेन न क्वापि यातुम्, स्वय वा क्वापि मिश्रयितु शक्ता—अत एव सा न घटवद् नश्यन्ती अस्ति ]

आक्षेप —

" आत्मा नो कर्मण कर्त्ता कर्मकर्त्रस्ति कर्म वै ।
वा सहज. स्वभावः स्यात् कर्मणो जीवधर्मता ॥ ७१ ॥
स्यादसग सदा जीवो बन्धो वा प्राकृतो भवेत् ।
चेश्वरप्रेरणा तत्र ततो जीवो न बन्धक ॥ ७२ ॥
तत केनापि हेतुना मोक्षोपायो न गम्यते ।
जीवे कर्मविधातृत्व नास्त्यस्ति चेन्न नश्यताम् " ॥ ७३ ॥

[ उत्तरार्धे तु-जीवे कर्मविधातृत्व न सङ्गतिमङ्गति, अथ अङ्गति चेत्, तस्य स्वाभाविकत्वेन तद् नहि नश्येत्—अतश्च न मोक्षोपाय –इति पूर्वपक्षहृदयम् ]

परिहार —

चेतनप्रेरणा न स्यादाददयात् कर्म क. खलु ।

प्रेरणा जड़जा नास्ति वस्तुधर्मो विचार्यताम् ॥ ७४ ॥
यदि जीवक्रिया न स्यात् सग्रहो नैव कर्मणः ।
अतो न सहजो भावो नैव वा जीवधर्मता ॥ ७५ ॥
यदि स्यात् केवलोऽसगः कथं भासेत न त्वयि ? ।
तत्त्वतोऽसग एवास्ति किंतु तन्निजबोधने ॥ ७६ ॥

[निजबोधने–निजस्वरूपबोधे जाते सति आत्मा तत्त्वत–असग एव प्रतीयते–इति तत्त्वम् ]

नेश्वरः कोऽपि कर्त्ताऽस्ति स वै शुद्धस्वभावभाक् ।
यदि वा प्रेरके तत्र मते दोषप्रसङ्गता ॥ ७७ ॥
यदाऽऽत्मा वर्तते स्वीये स्वभावे तत्करस्तदा ।
यदाऽऽत्मा वर्ततेऽस्वीये स्वभावेऽतत्करस्तदा ॥ ७८ ॥

आक्षेप —

स्याद् आत्मा कर्मणः कर्त्ता किन्तु भोक्ता न युज्यते ।
कि जानाति जड कर्म येन तत् फलद भवेत् ॥ ७९ ॥
भवेदीश्वरः फलदस्तदाऽऽत्मा भोगभाग् भवेत् ।
अप्यैश्वर्यं न युज्येत ईश्वरे फलदे मते ॥ ८० ॥

[ईश्वरे फलदे मते–स्वीकृते सति ईश्वरस्य ऐश्वर्यमेव न घटामटति ]

असिद्धे चेश्वरे नैव युज्यते जगतः स्थितिः ।
शुभाऽशुभविपाकाना ततः स्थान न विद्यते ॥ ८१ ॥

परिहारः—

भावकर्म निजा कल्पिरतश्चेतनरूपता ।
जीववीर्यस्य स्फूर्तेस्तु लाति कर्मचय जडम् ॥ ८२ ॥

निप सुधा न विचोऽपि स्वादक फलमाप्नुयात् ।
एवमेव शुभाऽशुभकर्मणो जीवभोक्तृता ॥ ८३ ॥
एको रङ्क' प्रजापोऽन्यः इत्यादिभेददर्शनम् ।
कार्य नाऽकारण क्वाऽपि वेद्यमेव शुभाशुभम् ॥ ८४ ॥
ईश्वर' फलदस्तत्राऽऽवश्यको न हि कर्मणि ।
परिणमेत् स्वभावात् तद् भोगाद् दूर विनश्यति ॥ ८५ ॥
तत्तद्भोग्यविशेषाणा स्थान द्रव्यस्वभावता ।
वार्तेय गहना शिष्य ! सत्तेपे सर्वथोदिता ॥ ८६ ॥

आक्षेप —

कर्ता भोक्ताऽस्तु जीवोऽपि तस्य मोक्षो न विद्यते ।
व्यतीतोऽनन्तकः कालस्तथाऽप्यात्मा तु दोषभाक् ॥८७॥
शुभकर्मकरो जीवो देवादिपदवीं व्रजेत् ।
अशुभकर्मकृज्जीव श्वभ्रम् न क्वाप्यकर्मक. ॥ ८८ ॥

परिहारः—

यथा शुभाशुभ कर्म जीवव्यापारत फलि ।
फलवन्निर्वाणमप्यस्य तद्व्यापारतस्तथा ॥ ८९ ॥
मदसत्कर्मणो भावादनन्तः समयो गत ।
सपद्येत तदुच्छेदे जीवे मुक्तिस्वभावता ॥ ९० ॥
आत्यन्तिको वियोगो हि देहादियोगतः खलु ।
तन्निर्वाण ममाख्यात तत्राऽनन्तसुखैकता ॥ ९१ ॥

आक्षेप.—

मोक्षस्थान कदापि स्यान्नाऽविरुद्धोपपत्ति तत् ।
अनन्तकालज' कर्मचयश्छेद्यः कथ भवेत् ॥ ९२ ॥

या मतानि सुभिन्नानि नैकोपायप्रदर्शीनि ।
मत सत्य तु कि तत्र शक्यैपा न विवेकिता ॥ ६३ ॥
कस्या जातौ भवेन्मोक्षो वेपे कस्मिंश्च निर्वृतिः ।
निश्चेतुमेतद् नो शक्य बहुभेदो हि दूषणम् ॥ ६४ ॥
तत एव हि ससिद्ध मोक्षोपायो न विद्यते ।
जीवादिज्ञानसप्राप्तौ का स्यादुपकृतिरहा ! ॥ ६५ ॥
प्रश्नपञ्चोत्तरे लब्धे समाधिः सकलोऽजनि ।
यदि तत्साधन विद्यां शिन श्रेयो भवेच्छिवम् ॥ ६६ ॥

परिहारः—

पञ्चोत्तरेण सजाता प्रतीतिस्तव ह्यात्मनि ।
मोक्षोपायस्तथा तात ! एष्यति सहज मनः ॥ ६७ ॥
अज्ञान कर्मभागोऽस्ति मोक्षोपायो निजस्थिति' ।
ज्वलिते ज्ञानदीपे तु नश्येदज्ञानतातमः ॥ ६८ ॥
यो यो बन्धस्य हेतु स्याद् बन्धमार्गो भवेत् स सः ।
बन्धोच्छेदस्थितिर्या तु मोक्षमार्गो भवान्तक ॥ ६९ ॥
रागो द्वेषस्तथाऽज्ञान कर्मणा ग्रन्थिरग्रगा ।
यस्मात् तन्निवृत्ति॰ स्याद् मोक्षमार्गः स एव भो' ! ॥१००॥
सश्चेतनामयो जीव सर्वाभासविवर्जितः ।
प्राप्यते स यतः शुद्धो मोक्षमार्गः स एव भो ! ॥१०१॥
अनन्तभेदक कर्म चाष्टौ मुख्यानि तेष्वपि ।
तत्रापि मोहना मुख्या वक्ष्ये तद्धनने विधिम् ॥ १०२ ॥
मोहन द्विविध तत्र दृष्टि–चारित्रभेदत॰ ।
बोध हि दर्शन हन्याच्चारित्र रागहीनताम् ॥ १०३ ॥

( दर्शन हि दर्शनमोहनीय कर्म बोधम्–आत्मस्वरूप-

बोधम् चारित्र च चारित्रमोहनीय कर्म रागहीनताम्–वीतरागताम् हन्यात् इति तत्त्वम्.)

क्रोधादियोगतः कर्मबन्धः शान्त्यादिघातक'।
अत्रानुभूतिः सर्वेषा तत्र का सशयालुता ॥ १०४ ॥

मतदृष्ट्याग्रह त्यक्त्वा विकल्पाचरण तथा।
आराध्येतोक्तमार्गो यै' तेषां हि जननाल्पता ॥ १०५ ॥

जातेर्वेषस्य नो भेदो यदि स्यादुक्तमार्गता।
तां तु य' साधयेत् सद्यो न काचित्तत्र भिन्नता ॥ १०६ ॥

(जातिः ब्राह्मणादिः, शूद्र–चाण्डालादिर्वा)

कषायस्योपशान्तत्व मोक्षे रुचिर्हि केवलम्।
भवे खेदो दया चित्ते सा जिज्ञासा समुच्यते ॥ १०७ ॥

सद्गुरोर्बोधमाप्नुयात् स जिज्ञासुर्नरो यदि।
तदा गम्यत्वलाभ स्यात् आत्मशोधनता अपि ॥ १०८ ॥

मतदृष्ट्याग्रहैर्हीना यद्वृत्तिर्गुरुपादयो।
स सलभेत सम्यक्त्व यत्र भेदो न पक्षता ॥ १०९ ॥

अनुभूति स्वभावस्य तल्लक्ष्य तत्र प्रत्यय'।
निजता सवेद्द वृत्ति सत्य सम्यक्त्वमुच्यते ॥ ११० ॥

भूत्वा वर्धिष्णु सम्यक्त्व मिथ्याभास प्रटालयेत्।
चारित्रस्योदयस्तत्र वीतरागपदस्थिति' ॥ १११ ॥

केवल स्वस्वभावस्य स्थिरा यत्र भवेद् मति.।
सोच्यते केवलज्ञान देहे सत्यपि निर्वृति' ॥ ११२ ॥

स्वप्नोऽपि कोटिवर्षस्य निद्रोच्छेदे समाप्यते।
विभावोऽनादिजो दूरे नश्येद् ज्ञाने तथा सति ॥ ११३ ॥

देहाध्यासो यदि नश्येत् त्वं कर्त्ता न हि कर्मणाम् ।
न हि भोक्ता च तेषां त्वं धर्मस्यैतद् गूढ मतम् ॥ ११४ ॥

मोक्ष एव ततो धर्माद्-मोक्षात्मा च त्वमेव भोः ! ।
अनन्तदर्शन त्वं च अव्याबाधरूपस्त्वकम् ॥ ११५ ॥

शुद्धो बुद्धश्चिदात्मा च स्वयं ज्योतिः सुखालयम् ।
विचारय ततो विद्धि स्वयं बहु तु किमुच्यते ॥ ११६ ॥

सर्वेषां ज्ञानिनामत्र समास्मिन्निति निश्चय ।
उक्त्वैव गुरुणा मौन समाधौ सहजे धृतम् ॥ ११७ ॥

यदा विभावभावः स्याद् भोक्ता कर्त्ता च कर्मणः ।
यदाऽनिभावभावः स्याद् भोक्ता कर्त्ता न कर्मणः ॥११८॥

स्वाभाविक्यस्ति या वृत्तिः शुद्धा या चेतनामयी ।
तस्या कर्त्ताऽस्ति भोक्ताऽस्ति निर्विकल्पस्वरूपभाक् ॥११९॥

उक्तो मोक्षो निजा शुद्धि' स मार्गो लभ्यते यत' ।
सक्षेपेणोदितः शिष्य ! नैर्ग्रन्थ' सकल. पथः ॥ १२० ॥

अत एव च—

जीवोऽस्ति स च नित्योऽस्ति कर्त्ताऽस्ति निजकर्मण' ।
भोक्ताऽस्ति च पुनर्मुक्तिर्मुक्त्युपाय सुदर्शनम् ॥ ४३ ॥

षट्स्थानीय समासेन षड्दर्शन्यपि उच्यते ।
प्रोक्ता सा ज्ञानिभिर्ज्ञातु पर तत्त्वं धरास्पृशाम् ॥ ४४ ॥

[ षण्णा स्थानाना-पूर्वतनश्लोकदर्शिताना समाहारः षट्स्थानी । षण्णा दर्शनाना समाहारः षड्दर्शनी ]

आत्मभ्रान्तिसमो रोगो नास्ति भिषग् गुरूपमः ।
गुरोराज्ञासम पथ्य ध्यानतुल्य न चौषधम् ॥ १२९ ॥

प्रेप्सव' परमार्थं ये ते कुर्वन्त्वात्मपौरुषम् ।
भवस्थित्यादिहेतोस्तु न च्छिन्दन्तु निजं बलम् ॥ १३० ॥

आकर्ण्य निश्चितां वाणीं त्याज्यं नैव सुसाधनम् ।
रक्षित्वा निश्चये लक्ष्यमाचर्यं साधनाचयः ॥ १३१ ॥

निश्चयो व्यवहारो वा नाऽत्रैकान्तेन दर्शितः ।
यत्र स्थाने यथायोग्यं तथा तद् युगलं भवेत् ॥ १३२ ॥

सद्व्यवहारहीनाऽस्ति कल्पना मतगच्छयोः ।
निजभानाद् ऋते तात ! निश्चयो न हि सुन्दरः ॥ १३३ ॥

अभूवन् ज्ञानिनः पूर्वं वर्तन्ते ये च नाऽऽगताः ।
भिदा तेषां समेषां वै मार्गभेदो न विद्यते ॥ १३४ ॥

सिद्धतुल्यान् समान् जीवान् यो जानाति भवेत् स सः ।
अर्हत्स्थितिर्गुरोराज्ञा निमित्तं तत्र विद्यते ॥ १३५ ॥

उपादानच्छलेनैव निमित्तानि त्यजन्ति ये ।
लभन्ते सिद्धभावं नो भ्रान्ताः स्युस्ते उत ध्रुवम् ॥ १३६ ॥

वक्ति ज्ञानकथा वक्त्राच्चित्तं मोहतमावृतम् ।
यस्य रङ्कस्य मर्त्यस्य ज्ञानिद्रोही स केवलम् ॥ १३७ ॥

दया शान्तिः क्षमा साम्यं वैराग्यं ज्ञान-सत्यते ।
मुमुक्षुहृदये नित्यमेते स्युः प्रकटा गुणाः ॥ १३८ ॥

यत्रास्ति मोहनं क्षीणं वा प्रशान्तं भवेत् तकत् ।
वाच्या ज्ञानिदशा साऽन्या भ्रान्तता स्फुटमुच्यते ॥ १३९ ॥

उच्छिष्टाभायमानं वा स्वप्नवद् वेत्ति यो जगत् ।
एषा ज्ञानिस्थितिर्वाच्या शेषं वाग्जालमामतम् ।
देहातीता दशा यस्य देहे सत्यपि वर्तते ।
तज्ज्ञानिचरणे मेऽस्तु वन्दनाऽगणिता त्रिधा ॥

इति आत्मा ।

अयं च परिस्पन्दी आत्मा विचित्रसंस्कारवशेन भिद्यमानोऽनेकभेदमापन्नोऽत्र संसारे संसरति तमेव दर्शयति—

स च त्रसरूपः स्थावररूपश्च ॥ ३ ॥

शीतादित्रासं प्राप्य तन्निवारणाय गन्तुं शक्तास्ते त्रसाः ये च गन्तुं न शक्ताः-केवलं स्थितिशीलाः-ते स्थावराः.

अल्पत्वेन स्थावरान् विभजति—

पृथिवी-जल-तेजो-वायु-वनस्पतयः स्थावराः ॥४॥

एते च प्रतीताः, एतद् भेदप्रभेदास्तु लोकशास्त्रत एव अवसेयाः, नवरम्-एते स्थावराः एकमात्रव्यक्तत्रिविधस्पर्शेन्द्रियलिङ्गाः, एतेषाम्-आहार-आयुः-स्थित्यादिकं तु प्रज्ञापना-व्याख्याप्रज्ञप्तितो जिनागमतोऽवसेयं तद्विस्तरार्थिना ।

तथापि कृपापरो ग्रन्थकारः सामसत एव तान् प्रत्येकं लक्षयति—

तत्र कठिना पृथ्वी ॥ ५ ॥

इतराऽवृत्तिकाठिन्यवत्त्वं पृथिव्या लक्षणम् । वनस्पत्यादौ काठिन्यवत्त्वेन अतिप्रसंगो माभूत्-इति काठिन्ये इतराऽवृत्तित्वं विशेषणम् । इतरपदं पृथिवीतरपरम् । इतरावृत्तित्वमात्रोपादाने जलाऽनलोभयगत-उभयत्वमादाय जल-तेजसोरुभयोर्न स्याद् अतिप्रसङ्ग इति काठिन्यवत्त्वं विशेष्यं न्यवेशि । अत्र वृत्तित्वम् अविष्वग्भावसम्बन्धेन बोध्यम्. तेन यत्किंचित्सबन्धेन उभयत्वस्य वृत्तित्वस्य न क्षतिः । यदा च सा पृथ्वी खनीगता-यावच्च व्याघातरहिता सचैतन्या तदा चेतनरूपा, यदा तु सा न तथा तदा अचेतना-जडा इति ।

सा द्विविधा नित्याऽनित्या च ॥ ६ ॥

सा पृथिवी द्रव्यार्थिकनयेन–द्रव्यरूपेण–नित्या, पर्यायार्थिकनयेन–कार्यरूपेण अनित्या, साम्प्रदायिक नयस्वरूपमग्रे वक्ष्यते। नित्याऽनित्यत्वपक्षस्तु 'अनेकजयपताका' दिभ्यो बोद्धव्य । एवमेव जलादिष्वपि नेया नित्याऽनित्यता.।

पृथिव्यनन्तर जल लक्षयति—

शीतस्पर्शवज्जलम् ॥ ७ ॥

तमोऽवृत्तिशीतस्पर्शवत्त्व जलस्य लक्षणम् तमस्यपि समस्ति शीतस्पर्शवत्त्वम्, अत उक्तम्—'तमोऽवृत्ति' इति। तावन्मात्रोपादाने तमोभिन्ने अनिलाऽनलादौ अतिप्रसङ्ग इत्यतो विशेष्यम्। एतदपि पृथिवीवत् चैतन्यवत् तद्भिन्न च, तथा तथैव नित्यम्, अनित्यमपि।

उष्णस्पर्शवत् तेज ॥ ८ ॥

स्पष्टार्थम्। शेष पूर्ववत्।

विजातीयस्पर्शवान् वायु ॥ ९ ॥

विजातीयस्पर्शवत्त्व वायोर्लक्षणम्। किमिद वैजात्यम्? –वैजात्य नाम पृथिव्यादि–अवृत्तित्वरूप ज्ञेयम्। अन्यत्तु प्राग्वत्।

प्रायोऽङ्कुरसम्बन्धी वनस्पति ॥ १० ॥

अविष्वग्भावसबन्धेन अङ्कुरवत्त्व वनस्पतेर्लक्षणम्। शेष तु चेतनाऽचेतन–नित्याऽनित्यादि पूर्ववद् ग्राह्यम्, प्राया–ग्रहण निर्मूली–प्रभृतीनामपि वनस्पतित्वख्यापनार्थम् तत्र अङ्कुरोद्गमस्य लोकेऽप्रसिद्धत्वात्। अत्र तत्तन्नामकर्मोदयवत्त्वम् धन्धेन पृथिव्यादिमत्त्व पृथिव्यादिजीवाना लक्षणमवसेयमिति

यद्यपि परमाणूना सर्वजातीयरूप-रस-स्पर्श-गन्ध-शब्दवत्त्वेन हिमेऽपि काठिन्यस्य, जलेऽपि उष्णस्पर्शस्य, अग्नावपि मणिसन्निधाने शैत्यस्य सद्भावात् काठिन्यमेव पृथिव्याम्, शीतस्पर्शमेव जलम्, उष्णस्पर्शभागेव अग्निः-इत्यादि व्यवस्थान नोचितीमञ्चति, तथापि लौकिकमेव व्यवहारमाश्रित्य अत्र इद ग्रन्थकृता विभक्तम्-यतो हि शास्त्राद् रूढिर्बलीयसी इति दिक्, अत्र विस्तरस्तु षड्दर्शनसमुच्चयबृहट्टीकातोऽवसेयः पुद्गलप्रकरणगत इति स्थावराः ।

अथ स्थावरानन्तर त्रसान् विभजति—

तद्भिन्नाः त्रसाः ॥ ११ ॥

परिस्पष्टसुखादिलिङ्गकत्वम्, त्रसनामकर्मोदयवत्त्व वा त्रसलक्षणम्—

ते चतुर्विधाः ॥ १२ ॥

ते त्रसाः द्वीन्द्रिय-त्रीन्द्रिय-चतुरिन्द्रिय-पञ्चेन्द्रियभेदात् चतुर्विधाः । त्रसानाम् इन्द्रियाणि द्वीन्द्रियादिशब्देनैव प्रतीतानि, तेषा पूर्वोक्ताना स्थावराणा च श्वास-निःश्वास-आहार-निहार-विहार—आयु स्थिति-कर्मबन्ध--विविधचेष्टादिक सर्वं प्रज्ञापना-श्रीभगवतीतः समवबोध्यम् । तद्भेदप्रभेदा अपि तत एव समवगम्याः ।तेषाम् " अमुकस्य इमानि इयन्ति इन्द्रियाणि ' इत्यादिको विभागः अग्रे वक्ष्यते

पूर्वदर्शितमपि इन्द्रियस्वरूप विस्तरतो दर्शयितुकामो ग्रन्थकारः अत्र एकेन्द्रियादिक्रमभङ्गतस्तल्लक्षणादिना पुनरपि सम्प्रदायरुचिभ्य शिष्येभ्यः प्ररूपयति—

इन्द्रलिङ्गम् इन्द्रियम् ॥ १३ ॥

'इन्द्रस्य लिङ्गम्' इन्द्रियम्–इति व्युत्पत्त्या इन्द्रस्य आत्मन तदावरणक्षयोपशमे सति स्वयमर्थान् ग्रहीतुमसमर्थस्य यद् अर्थोपलब्धिनिमित्त तदेव इन्द्रियम्–इत्यर्थः ।

तद् द्विविधम्–द्रव्येन्द्रियम् भावेन्द्रियं च ॥ १४ ॥

तद् इन्द्रिय द्विविधम्–द्विप्रकारमिति । उपयोगानात्मक द्रव्येन्द्रियम्, उपयोगात्मक भावेन्द्रियम् । उपयोगश्चात्र सत्तारूप', प्रवर्तमानो वा ग्राह्य, ततश्च न लब्धिरूपे भावेन्द्रिये अव्याप्तिः । तदुक्त आगमे–" अणुवओगो दव्व, उवओगो भावो " इति ।

पुनस्तत् प्रत्येकमपि द्विविधम्–इत्याह—

तत्र आद्य द्विप्रकारम् निर्वृत्तिरूपम्, उपकरणरूप च ॥१५॥

तत्र द्रव्येन्द्रिय–भावेन्द्रिययोर्मध्ये आद्यम्–प्रथम द्रव्येन्द्रिय द्विप्रकारकम्–द्विरूपमिति । निर्वर्त्यते–निष्पाद्यते इति व्युत्पत्त्या कर्मनिष्पन्नत्व निर्वृत्तिरूपम् । तदपि द्विविधम्–बाह्याऽभ्यन्तरभेदात् । तत्र तावद् बाह्यनिर्वृत्ते स्वरूपमाह—आत्म प्रदेशाधिकरणकनामकर्मेन्द्रियापादितावस्थाविशेषपुद्गलप्रचयरूपम् । आभ्यन्तरनिर्वृत्त स्वरूप तु नेत्रादीन्द्रियसस्थानावस्थितात्मप्रदेशाकृतिवृत्तिरूपम् । उपकरणेन्द्रियमपि द्विविधम्-बाह्याभ्यन्तरभेदात् । निर्वृत्त्युपकारजनकत्वम् उपकरणेन्द्रिय लक्षणम्–बाह्यम् अक्षिपत्र–पक्ष्मद्वयादि । आभ्यन्तर तु कृष्णशुक्लमण्डलरूपम् । एव शेषेष्वपि ज्ञेयम् इति द्रव्येन्द्रियम् ।

अन्त्यमपि द्विविधम्–लब्धिरूपम् उपयोगरूप च ॥ १६ ॥

अन्त्य भावेन्द्रिय द्विविधम्–द्विप्रकारम्–लम्भन लब्धिः,

सा च ज्ञानावरणक्षयोपशमविशेषस्वरूपा, तत्सन्निधानाद् आत्मा द्रव्येन्द्रियम् व्यापारयति, तन्निमित्त आत्मन' परिणामः उपयोग'—तदुभय भावेन्द्रियम् इति भावेन्द्रियम् ।

पुनस्तानि चतुर्विधान्यपि प्रत्येकश पञ्च प्रकाराणि इत्याह—

**स्पर्शन-रसन-घ्राण-चक्षुः-श्रोत्राणि ॥ १७ ॥**

एतानि क्रमेण स्पर्श-रस-गन्ध वर्ण-शब्दविषयाणि । स्वस्वविषयोपलब्धिनिमित्तत्वे सति इन्द्रियत्वम्—इति पञ्चानामपि इन्द्रियाणा विशेषलक्षण ज्ञेयम् । अत्र लक्षणे विशेषण-—विशेष्ययोः सार्थक्य स्पष्टमेव, अतोऽनुक्तमपि स्वयमूह्यम् ।

केषा कतिसख्याकानि इन्द्रियाणि ? इत्याकाङ्क्षाशमनाय आह—

**तत्र वनस्पत्यन्तानामेकम् ॥ १८ ॥**

तत्र उक्तपञ्चविधाया पृथिव्यादि—वनस्पत्यन्ताना पञ्चानामित्यर्थः, तेषामेक स्पर्शनेन्द्रियमिति ।

अवशिष्टाना त्रसाना द्वीन्द्रियादिमत्त्व केषाम् ? इति जिज्ञासायामाह—

**कृमि-पिपीलिका-भ्रमर-मनुष्यादीनामेकैकवृद्धानि ॥१९॥**

एकैकेन वृद्धानि एकैकवृद्धानि इति समासेन उत्तरोत्तरम् एकाधिकेन्द्रियवत्त्व लभ्यते । तच्चेत्थम्—कृमि-गण्डूपद-शङ्ख-—शुक्ति-जलौक प्रभृतीनि द्वीन्द्रियाणि—तेषा स्पर्शन-सरसनम् - रसनाधिकमिति। पिपीलिका-कुन्थु-मत्कुणादीनि त्रि-इन्द्रियाणि-तेषा स्पर्शन-रसन-घ्राणानि इति । भ्रमर-दश-वृश्चिकादीनि चतुर्-इन्द्रियाणि तेषा तानि एव त्रीणि इन्द्रियाणि

नेत्राधिकानि। मनुष्य-नारक-देवादीनि-पञ्च-इन्द्रियाणि तेषा पूर्वोक्तान्येव चत्वारि इन्द्रियाणि श्रोत्राधिकानि-इति।

इन्द्रियनिरूपणानन्तरं प्रसङ्गत अनिन्द्रियं निरूपयति—

अनियतविषयत्वे सति इन्द्रलिङ्गत्वम् अनिन्द्रियत्वम् ॥२०॥

'सत्य'न्तमात्रोपादाने गगनादौ अतिव्याप्तिः, अतो विशेष्यम् केवल विशेष्योपादाने चक्षुरादौ अपि अतिप्रसक्ति, अतो विशेषणम्-इति उभयो. विशेष्यविशेषणयोः साफल्यम्, लक्षणस्य च अदुष्टत्वम्। अनिन्द्रिय-नाइन्द्रियम्-मन' इत्यर्थः। अत्र 'अनुदरा कन्या' इतिवत् नञ् ईषदर्थे।

तद् द्विविधं द्रव्य-भावभेदात् ॥ २१ ॥

तद् अनिन्द्रियं द्विविध-द्विप्रकारम् उक्तभेदात्।

तत्र द्रव्यमनो लक्षयति—

पुद्‌गलविपाकिकर्मोदयापेक्षत्वम् ॥ २२ ॥

भावमनो भावयति—

वीर्यान्तराय-नोइन्द्रियावरणक्षयोपशमापेक्षकात्मविशुद्धिरूपत्वम् ॥ २३ ॥

अधुनैव निरूपितं मन., अत तद्वताम् च निरूपण प्रसङ्गप्राप्तम्-ततोऽस्य तदेव निरूपयति सूत्रकार'—

समनस्काऽमनस्काश्च ॥ २४ ॥

समनस्क-शब्दोऽत्र मनुष्यादिवद् विशेषस्पष्टमनस्साहित्यसूचक', अमनस्कशब्दस्तु अत्र उदरं च अनुदरा कन्यावद् अल्प-अस्पष्टमनःसाहित्यसूचक। एते त्रसा उभयप्रकारा अपि प्राप्यन्ते, तेषु समनस्काः मनुष्य-पशुप्रभृतय., अमनस्कास्तु द्वीन्द्रियादिपञ्चेन्द्रियपर्यन्ता कीटविशेषा'—सञ्ज्ञा-

हीनापरपर्याया लोकप्रतीता जीवविचारादिग्रन्थतोऽवबोध्या । एते सूक्ष्मेण मनसा युता अपि अमनस्काः । अत्र विषये श्रीयशोविजयमहोपाध्याया एतदेव मत संवदन्ति. तथाहि— " न च तेन द्वीन्द्रियादीनां समनस्कतापत्तिः, कपर्दिकामत्तया धनित्वस्य इव, एकया गवा गोमत्त्वस्य इव–सूक्ष्मेण मनसा समनस्कत्वस्य आपादयितुम् अशक्यत्वात् " ( ज्ञानबिन्दौ पृ. ११४ मा. )

स्थावरास्तु अमनस्काः ॥ २५ ॥

ये तु जीवा स्थावरशब्दवाच्याः—ते सर्वेऽपि प्रायः अल्पतम–अस्पष्टतममनस्सहिताः–अत एव च अमनस्काः–एते च लज्जालुलतादयः स्थावराः प्रतीता एव ।

इन्द्रियाणि, मनः, तत्स्वामिनश्च निरूप्य–अथ प्रसङ्गप्राप्तानि जीवाधिष्ठितानि शरीराणि, तत्स्वामिनश्च कथयितुम् आदौ तावत् शरीरसामान्यमेव लक्षयति—

विशिष्टनामकर्मोदयापादितवृत्तिमत् शरीरम् ॥ २६ ॥

निशीर्यते–इति व्युत्पत्त्या वा विशरणशालित्वं शरीरसामान्यलक्षणम् ।

तद्भेदान् आह—

तद् औदारिक–वैक्रिय–आहारक–तैजस–कार्मण–भेदात् पञ्चविधम् ॥ २७ ॥

औदारिकमवलक्षयति —

उदारताप्रयोजनकम्, उदरगताहारपुष्टिपोष्य वा औदारिकम् ॥ २८ ॥

उदारं स्थूल प्रयोजनमस्य–इति व्युत्पत्त्या शरीरविशेष-

वाचकस्य औदारिकपदस्य कोऽर्थ ? इत्याशङ्कायां तनच्छन्दार्थमाह–उपादानात् प्रभृति अनुसमयमुद्गच्छति नाम वर्धते इत्युदारम्। तल्लक्षण तु सजातीयेतरव्यावर्तनाय प्रोक्तं प्राक्।

वैक्रिय विवृणोति—

विक्रियाफलक वैक्रियम् ॥ २६ ॥

विविध क्रियते नाम–एक भूत्वा अनेक भवति, अनेक भूत्वा एक भवति, अणु भूत्वा महद् भवति, महद् भूत्वा अणु भवति–इत्यादि विक्रियायां जायते तद् वैक्रियमिति।

आहारकमालेखयति—

निर्वृत्त्यर्थकम् आहारकम् ॥ ३० ॥

आह्रियते–निर्वर्त्यते इति आहारकम्। केन ? इति चेत् प्रमत्तसयतेन चतुर्दशपूर्वधरेण इति पूरणीयम्। किमर्थम् ? इति चेत् सूक्ष्मपदार्थनिर्ज्ञानार्थम्, असयमपरिजिहीर्षया वा सदेहनिवारणाय इति।

तैजसम् उत्तेजयति—

तेजोनिमित्त तैजसम् ॥ ३१ ॥

तेजसो विकारो तेजोमयम्, तेजः स्वतत्त्व शापाऽनुग्रह प्रयोजनत्वमिति।

कार्मण परिकर्मयति—

कर्मोपादान कार्मणम् ॥ ३२ ॥

कर्मणो विकार कार्मणम्–कर्म उपादान यस्य तत् कार्मणमित्यर्थ। कर्मणा–क्रियया–प्रवृत्त्या सगृह्यमाणत्वेन कार्मणमभिधीयते। एतदपि सर्वेषामेव देहधारिणाम्। नवरम् एतदेव कार्मण शरीर सर्वशरीरमूलभूतम्–ससारकारण च।

वस्तुतस्तु ये निजभाननाशकाः कषायादिसंस्काराः ते एव कार्मणपदवाच्याः तेषां भावकर्मत्वेन सुप्रतीतत्वात्। एतत् तु कार्मणं शरीरं कर्मपुद्गलमयत्वेन द्रव्यतः कर्मरूपम्। यद्यपि सर्वाण्येव शरीराणि कर्मकृतानि, तथापि न तानि कार्मणानि-कर्ममयानि, किन्तु कर्मनिमित्तकानि एतत् तु कर्ममयमेव इति कार्मणेतरयोर्विशेषः—औदारिकम्, औदारिकपुद्गलमयम्, वैक्रियं वैक्रियपुद्गलमयम्, आहारकम् आहारकपुद्गलमयम्, तैजसं च तेजःपुद्गलमयम्,—एतानि चत्वार्यपि तत्तत्पुद्गल-मयानि कर्मसहकारीणि, कार्मणं तु कर्ममयमेव। एतदेव च वैदिकशासने 'लिङ्गशरीर' नाम्ना प्रथितमिति।

ननु—औदारिकवत् इतरेषां कस्मान्न चाक्षुषत्वम्? अत आह—

परं परं सूक्ष्मम् ॥ ३३ ॥

पर-शब्दस्य अनेकार्थकत्वेऽपि विवक्षातः व्यवस्था इति अर्थगतिरिष्टा-यथा औदारिकं स्थूलम्, ततः सूक्ष्मं वैक्रियम्, ततः सूक्ष्मम् आहारकम्, ततः सूक्ष्मं तैजसम्, तैजसात् कार्मणं सूक्ष्मम् इत्यर्थः।

वीप्सितपरपदसहोच्चरितसूक्ष्मशब्दबोध्यस्य प्रदेशपदवाच्य-परमाणुप्रकृष्टत्वं मा जायताम्-अत आह—

प्रदेशतोऽसङ्ख्येयगुणं प्राक् तैजसात् ॥ ३४ ॥

प्रदिश्यन्ते अविभागित्वेन-प्ररूप्यन्ते-इति प्रदेशाः पर-माणवः। सङ्ख्यामतीतोऽसङ्ख्येयः, असङ्ख्येयो गुणो यस्य तद् असङ्ख्येयगुणम्। कुतः? प्रदेशतः-न तु अवगाहतः। 'परं परम्' इत्यनुवृत्ते 'आ कार्मणात्' प्रसङ्गे सति तन्निषेधार्थ-

माह—' प्राग् तैजसात् ' इति । औदारिकाद् असख्येयगुणप्र-देश वैक्रियम्, तत' असख्येयगुणप्रदेशमाहारकम् इति ।

उत्तरयो' तैजसकार्मणयो. समप्रदेशसशयस्य दूरीक-र्तुमाह—

अनन्तगुणे परे ॥ ३५ ॥

' प्रदेशत ' इत्यनुवर्तते, तेनैव अभिसबन्ध' क्रियते-आहारकात् तैजस प्रदेशतोऽनन्तगुण, तत कार्मणम् अनन्त गुणमिति ।

औदारिकशरीरयुतो गच्छन् प्राणी भित्त्यादौ प्रतिघात लभमानस्ततो निवर्तते, तथा तैजस-कार्मणमात्रयुतोऽपि यत्र क्वापि सचरन् प्राणी प्रतिघात लभते न वा ? इति निराकर्तु व्याकुरुते—

पुनरप्रतिघाते ॥ ३६ ॥

मूर्तस्य मूर्तान्तरेण व्याघात प्रतिघात, मूर्तत्वेऽपि सूक्ष्मपरिणामात् स नास्ति-अनयो —इति अप्रतिघाते। मूर्त-मपि तेज सूक्ष्मत्वेन अय पिण्डे प्रविशद् नाऽऽयसै' परमाणु-स्कन्धे प्रतिहन्यते, तथैव मूर्तयोरपि तैजस-कार्मणयोर्नास्ति क्वापि वज्रपटलपर्वतादिषु प्रतिघात इति ।

औदारिकादिभ्योऽनयो' किमियानेव विशेष. ? उताऽस्ति अन्योऽपि कश्चन ? इति वच समाधातु सघत्ते—

अनादिसम्बन्धे च ॥ ३७ ॥

' च ' शब्दो व्यवस्थितविकल्पार्थ' । अनादिसम्बन्धे चात् तु सादिसम्बन्धे अपि । कार्यकारणभावसततया बीजवृक्षवत् जीवेन तयो अनादिक' सम्बन्ध । विशेषापेक्षया तु सादि-

कोऽपि तयोः सम्बन्धः। तथाहि—कर्मणां च्योत्पत्तिशालित्वेन तैजसपुद्गलानां तु परावृत्तिधर्मत्वेन यत् स्यात् मनुजगतिसहचारि कार्मण शरीरम्, तैजस वा शरीर न तदेव स्यात् देवगतिसहचारि, तिर्यग्गतिसहचारि वा, अत एव तत्तद्विशेषगत्यपेक्षया ते अनादिसम्बन्धे अपि स्याता सादिसम्बन्धे। विशेषतासापेक्षत्वेन च सादिसम्बन्धस्य न अनादिसम्बन्धेन विरोधः। औदारिक-वैक्रिय-आहारकाणि शरीराणि यथा जीवस्य कादाचित्कानि, न तथा तैजसकार्मणे, एते तु नित्यसम्बन्धिनी हि आ ससारक्षयात्-इति।

एते तैजस-कार्मणे किं कस्यचिदेव भवतः? उत अविशेषेण सर्वस्य? इत्याह—

ते सर्वस्य ॥ ३८ ॥

सर्वशब्दो निरवशेषवाची, निरवशेषस्य ससारिणो जीवस्य ते द्वे अपि शरीरे भवतः।

अविशेषाभिधानात् तैरौदारिकादिभिरपि सर्वस्य ससारिणो यौगपद्येन सम्बन्धप्रसङ्गे सति सभाविशरीर प्रदर्शयन् आह—

तदादीनि भाज्यानि युगपद् एकस्मिन् आ चतुर्भ्यः ॥३९॥

तच्छब्द प्रकृततैजस-कार्मणप्रतिनिर्देशार्थः-ते तैजस-कार्मणे आदिर्येषा तानि-तदादीनि-भाज्यानि-विकल्प्यानि, कुत.? आ चतुर्भ्यः युगपद् एकस्य आत्मनः कस्यचिद् द्वे-तैजस-कार्मणे, अपरस्य त्रीणि-औदारिक-तैजस-कार्मणानि, वैक्रिय-तैजस-कार्मणानि वा, अन्यस्य पुनश्चत्वारि-औदारिक-आहारक-तैजस-कार्मणानि इति विभागः। वैक्रियाऽऽ-

हारकयोर्यागपद्यासमनेन न कदाचिदपि एकस्यैव आत्मनो युगपदेव शरीरपञ्चक भवेत् इति ।

तेषामेव शरीराणा विशेषप्रतिपत्त्यर्थं प्रतिपादयति—

निरुपभोगमन्त्यम् ॥ ४० ॥

अन्ते भवम्–अन्त्यम् किं तत् ? कार्मणम् । इन्द्रियादि–प्रणालिकया शब्दादीनामुपलब्धिरुपभोग:, तदभावात् एतत् कार्मण निरुपभोगम् ।

प्रादुर्भावमापद्यमानानि अमूनि शरीराणि किमविशेषण सभवन्ति ? उतास्ति कश्चिद् विशेष: ? इति स्पष्टयितुमाह—

गर्भसमूर्छनजमाद्यम् ॥ ४१ ॥

सूत्रक्रमापेक्षया–आदौ भवमाद्यम्–औदारिकमित्यर्थ: । यद् गर्भजम्–मातृ–पितृसयोगेन जायमानम्–जरायुजम्–अण्डजम्–पोतजम्, यच्च समूर्छनजम् मातृ पितृसयोगमन्तरा–अनल–जल–स्थलादिसामग्र्या–समविष्णु तदेतद् उत्पत्त्या द्विप्रकार मपि सर्वम् औदारिकम् अवसेयम् ।

वैक्रियस्योत्पत्तिप्रकार प्ररूपयति—

औपपादिक वैक्रियम् ॥ ४२ ॥

उपपादेन भवम्–औपपादिकम्–तत्सर्वं वैक्रिय विज्ञेयम् । तच्च देवानाम्, नारकाणा च । स्वामित्वमन्तरा समूर्छनज–औपपादिकयोर्विशेषो नास्माभिरवगत इति ।

वैक्रियस्य अन्यमपि उत्पत्तिप्रकार प्राह—

लब्धिप्रत्यय च ॥ ४३ ॥

तदेतद् उपरि निर्दिष्ट वैक्रिय लब्धिप्रत्ययमपि सभवति

लब्धिश्च तपोविशेषात् प्राप्तः शक्तिविशेषः, सा एव प्रत्ययः कारणं यस्य तत्। एतच्च लब्धिप्रत्ययं भावसाध्वादीनां सम्भवति। 'औपपादिकं वैक्रियं लब्धिप्रत्ययं च' इति एकयोगेनाऽपि सिद्धे पृथक्सूत्रमिदम् उत्तरार्थमिति।

अतः—

तैजसमपि ॥ ४४ ॥

वैक्रियवद् एतत् तैजसमपि केषाञ्चित् सुतपस्विनां लब्धिप्रत्ययमपि सम्भवति।

स्वरूप-स्वामिनिर्धारणपूर्वकम् आहारकमुल्लिखति—

शुभं विशुद्धम् अव्याघाति च आहारकं प्रमत्तसंयतस्यैव ॥ ४५ ॥

शुभ–शुभद्रव्योपचितम्, विशुद्ध–निर्मलद्रव्योपचितम्, निरवद्यम् इति यावत्, अप्रतिघाति–व्याघातरहितम्, व्याघातश्च पूर्वोक्तस्वरूपः। स्वामी चास्य प्रमत्तः संयमी। अप्रमत्तानां महानुभावानां विमर्शोद्देशचेष्टाया विरहात्। प्रयोजनं चास्य कस्मिंश्चिदर्थे संदिहानो निश्चयाधिगमार्थं क्षेत्रान्तरितस्य भगवतः समीपे औदारिकेण अशक्यगमनं मत्वा लब्धिप्रत्ययमेव आहारकं उत्पादयति, छिन्नसंशयश्च भगवन्तं दृष्ट्वा पुनरागत्य तद् विसृजति। यदा आहारकशरीरं निर्वर्तयितुमारभते तदा प्रमत्तो भवति इति एतत् 'प्रमत्तस्य' उच्यते। लब्धिप्रत्ययत्वेन विक्रियारूपत्वेन च एतदपि वैक्रिये समन्तर्भावयितुमुचितम् तथापि स्वामिप्रयोजनयोर्विशेषतावैशद्याय एतत् पृथक् सूत्रितमिति शरीराणि।

अथ आत्मन एव उपग्राहकान् उपघातकांश्च नामतः स्वरूपतश्च दर्शयति—

यदस्ति जड तत् सर्वम् उपग्राहि, उपघाति च ॥ ४६ ॥

यावद् आत्मा परिस्पन्दते नात्यन्त निमाररहितो भवेत् तावदेव पुद्गलाऽपुद्गलरूप जड वस्तु आत्मनः उपग्राहि, उपघाति च भवति। यथा हि विषशस्त्रादिकमपि विवेकपूर्वक व्यापारयतो जनस्य उपगृह्णाति-तदेव च निर्विवेकेन व्यापारयतो घातयति-तथैव एतदपि जड वस्तु उपग्रहोपघातपरतया समवगन्तव्यम् ।

मूर्ताऽमूर्त जडम् ॥ ४७ ॥

जडमपि वस्तुचक्रम् मूर्ताऽमूर्तत्वेन द्विधा नेयम्, आकाशादिरूप जडम्, अमूर्तम्—तच्च प्रतीतम् तदितरत् तु मूर्तम् धर्माधर्मपुद्गलरूपम् ।

गतिदाता धर्म ॥ ४८ ॥

परिस्पन्दिनो हि आत्मनो गतिदाता ऊर्ध्वम् ऊर्ध्वम्-विकाश प्रापयिता धर्म -स च अहिंसादिलक्षण' तथा च भगवतीसूत्रम्-" धम्मत्थिकायस्स ण भते। केवइया अभिवयणा पण्णत्ता? गोयमा! अणेगा अभिवयणा पण्णत्ता, त जहा-धम्मे ति वा, धम्मत्थिकाए इ वा, पाणाइवायवेरमणे ति वा, मुसावायवेरमणे ति वा एव जाव परिग्गहवेरमणे, कोहविवेगे जाव ×मणगुत्ती ति वा, वइगुत्ती ति वा, कायगुत्ती ति वा-जे याऽवाऽण्णे तहप्पगारा सव्वे ते धम्मत्थिकायस्स अभिवयणा " ( शतक २०, उद्देशक द्वितीय ) यथा च गतिं विना क्वचित् कुहरगतमुदक परिशटद् अपेय भवति, तथैवाऽय परिस्पन्दमान आत्मा गतिं-अहिंसादिप्राप्ति-लक्षणविकास विना परिशटमानः-अभव्य'-स्वरूपप्राप्तौ अयोग्यो भवति इति। यस्तु

'चलणसहावो धम्मो' इत्यादिशास्त्रेण प्रसिद्धः अमूर्तरूपो धर्मास्तिकायनामा पदार्थः–जीव–जडगतौ अपेक्षाकारणत्वेन जैनदर्शने एव स्वीकृतः–सोऽपि अत्र सूत्रे तन्त्रतया विवक्षित'–अप्रधानभावेन–इति ।

आक्षेपः—

ननु त्वया नवीनेन अर्वाग्दृशा स प्रसिद्धो धर्मास्तिकायः —अत्र सूत्रे अप्रधानभावेन एव केवल भिन्नव्याख्यानग्रहदर्शनाय एव उल्लिखितः–न च स एव प्रधानभावेन अत्र निर्दिष्ट, तदिय कीदृशी स्वमनीषिका ?

परिहारः—

न चेय स्वमनीषिका, किन्तु आगमपूर्वकम्, शिष्टानामुक्तिपूर्वक चैतद् निर्दिष्टम्–उपर्युक्त–श्रीभगवतीसूत्रस्थपाठ एव अत्र निर्दिष्ट मम नवीनमपि व्याख्यान दृढयति–इति न एतस्य व्याख्यानस्य आगमपूर्वकत्वे कोऽपि शङ्काकणः किञ्च, भगवान् सिद्धसेनोऽपि स्वीयवचनेन एतदेव व्याख्यान समर्थयति तथा च तद्वचनम्—

" प्रयोग–विस्रसाकर्म–तदभावस्थितिस्तथा ।
लोकानुभावहृतान्तः किं धर्माधर्मयो फलम् ॥ २४ ॥
निश्चयद्वात्रिंशिका—१९.

ईदृशावेव आक्षेप–परिहारौ वक्ष्यमाणे अधर्मसूत्रेऽपि समनबोध्यौ

गतिप्रतिषेधी अधर्मः ॥ ४९ ॥

अधर्मो हि आत्मनो विकासरूपां गतिं प्रतिषेधति, ततश्च

आत्मा नाऽनन्तकालेनाऽपि स्वरूपावस्थितो भवेत् स च अधर्मो हिंसादिलक्षण तथा च भगवतीसूत्रम्—

" अहम्मत्थिकायस्स णं भंते ! केवइया अभिवयणा पण्णत्ता ? गोयमा ! अणेगा अभिवयणा पण्णत्ता, तं जहा-अधम्मे ति वा, अधम्मत्थिकाए ति वा, पाणातिपाते ति वा जाव मिच्छादसणसल्ले ति वा, ××× मणअगुत्ती ति वा, वइअगुत्ती ति वा, कायअगुत्ती ति वा जे यावऽण्णे तहप्पगारा सव्वे ते अहम्मत्थिकायस्स अभिवयणा " ( शतक २०, उद्देशक द्वितीय ) यद्यपि एतौ धर्माऽधर्मौ आत्मनो विभावशील-परिस्पन्दरूपत्वेन न केनाऽपि मूर्तौ समवलोकितौ, तथापि तयोर्यदा द्रव्यधर्माऽधर्मता विचार्यते तदा कर्मपरमाणुचयरूप-त्वेन तयोर्मूर्तता सुस्पष्टतरैव ।

पूरण-गलनरूपं पुद्गलम् ॥ ५० ॥

तच्च अनेकधा—

" स्पर्श रस गन्ध-वर्णा शब्दो बन्धश्च सूक्ष्मता स्थौल्यम् ।
संस्थान भेद तम-श्छाया उद्योताऽऽतपश्चेति ॥ २१६ ॥
" कर्म शरीर मनो-वाग्विचेष्टितो-च्छ्वास-दु:ख-सुखदा: स्युः ।
जीवितमरणोपग्रहकराश्च संसारिण स्कन्धा " ॥ २१७ ॥
( प्रशमरतौ )

अर्थात्—स्पर्शपुद्गला, रसपुद्गला, गन्धपुद्गला, वर्ण-पुद्गला, शब्दपुद्गला, तम पुद्गला, छायापुद्गला:, उद्योत-पुद्गला., आतपपुद्गला, कर्मपुद्गला., शरीरपुद्गला, मन पुद्गला, वाक्पुद्गला, उच्छ्वासनिःश्वासपुद्गला -एवमनेकधा पुद्गला ज्ञेया इति स्पष्टमेतत् ।

विभावुकस्य आत्मनः परिस्पन्द आस्रवः ॥ ५१ ॥

यद्यपि अयम् आस्रववाच्यार्थः पूर्वोक्तयोर्धर्माऽधर्मयोरन्त र्भवति, तथापि श्रीजिनशासने आश्रवशब्दस्य सविशेष प्रसिद्धत्वेनैव तस्याऽत्र पृथग् व्याख्या। शुभश्चेदयम् आत्मानम् उपगृह्णाति, अयमेव अशुभो निघातयति आत्मनिकासम् इति।

शुभाऽशुभानाम् आश्रवाणां निरोधरूपो य आत्मनः परिस्पन्दः—स स्वरूपावस्थाननिमित्तत्वेन आत्मानम् उपगृह्णात्येव स च—

तन्निरोधः स्वरूपावस्थानसहायी संवरः ॥ ५२ ॥

एतौ आश्रव-संवरौ आत्मपरतन्त्रौ, आत्मा सकर्मकत्वेन नैकप्रकारः, अत एव एतयोरपि नानात्वं स्वयमेव नेतव्यमिति आत्मन' उपग्राहक-उपघातकाः।

स्वरूपावस्थानरूपं मोक्षतत्त्वं समाधनम् आत्मकाण्डे एव प्रमण्डितम्, ततो नात्र निनियते

इति—आत्मकाण्डम्



## प्रकीर्णकाण्डम्

पूर्वं तावत् मध्यस्थया दृशा, नवीनया च दिशा व्याख्यातमपि सर्वं सम्प्रदायदृष्ट्या व्याख्यातुकामो ग्रन्थकार अस्मिन् प्रकीर्णकाण्डे उपयोग-उपयोगभेद-प्रमाण-प्रमाणभेद-यास्त्रवादिमोक्षान्त पुनरपि प्ररूपयति ।—

**चेतनात्मक उपयोग । १ ।**

चिति -चेतना-चिच्छक्तिरिति यावत् तदेव स्वरूपम्-उपयोगस्य इति ।

चेतनात्मकत्वम् उपयोगसामान्यलक्षण प्ररूप्य तदवान्तरभेदान् प्रदर्शयितुमुपक्रमते—

**स त्रिविध ज्ञाना-ऽज्ञान-दर्शनभेदात् । २ ।**

स उपयोग त्रिविध -त्रिप्रकार इति यावत् ।

तत् त्रैविध्यमेव क्रमश' मलक्षयन्नादौ तावत् ज्ञान विवेचयति—

**प्रधानविशेषम् उपसर्जनीभूतसामान्य ज्ञानम् । ३ ।**

प्रधानो मुख्यविशेष्यतया भासमान. विशेषो व्यक्त्यादिरूप', उपसर्जनीकृत गुणीभूतम्, सामान्य सत्त्वादिरूप च यत्र भाति-यथा इद द्रव्यम् ।

अल्पज्ञधीवृद्धये ज्ञानीयप्रपञ्च स्यान्मात्र विशदयति-नान विषयि, अर्थो विषया , तयो परस्पर स्याद्वादसिद्धोऽध्यघमेयाऽध्यवसायिभावलक्षण मबन्ध.। अत्र ज्ञानीया ध्यवमेयता-त्रिविधा-विशेष्यताख्या, प्रकारताख्या, ससर्गताख्या च । तथा च ' इदम् द्रव्यम् ' इत्यादौ इदत्वावच्छिन्नविशेष्यतानिरूपित-

द्रव्यत्वावच्छिन्नप्रकारताशालि-अभेदससर्गकं ज्ञान भवतीति-दिक् ।

ज्ञानस्य किंचित्स्वरूप प्रदर्श्य तद्भेदानाह—

**तत् मति-श्रुता-ऽवधि-मनःपर्याय-केवलभेदात् पञ्चविधम् ॥ ४ ॥**

स्पष्टम् ।

दर्शितपञ्चभिदायामाद्य मतिज्ञान लक्षयति—

**उत्पन्नाऽविनष्टपदार्थग्राहकं सत् सांप्रतकाल-विषयताशालि मतिज्ञानम् ॥ ५ ॥**

त्रिकालविषयके श्रुतादावतिप्रसगवारणाय सत्पदान्त विशेपणम् । तदुपादाने च श्रुतादेः उत्पन्नविनष्टाऽनुत्पन्नाद्यर्थस्यापि ग्राहकत्वेन उत्पाद्याऽविनश्यत्पदार्थमात्रग्राहकार्थकसत्पदान्तघटितमतिज्ञानलक्षणस्य नातिप्रसगः । कालविशेपनियामकतया विशेष्यमपि सफलम् तदपि सांप्रतकालमात्रार्थकम्-तेन केवलादिव्युदासः । मतेरर्थस्तु-' इन्द्रियमनोभ्या यथास्व अर्था मन्यन्तेऽनया ' इति मतिः ।

अथ मतिज्ञानलाभे किं निमित्तम् ? इत्याह—

**तद् इन्द्रियाऽनिन्द्रियनिमित्तम् ॥ ६ ॥**

तद् मतिज्ञानम्-इन्द्रिय चक्षुरादि, अनिन्द्रिय मनः एतदुभयनिमित्तम्-उभयकारणकमित्यर्थः ।

अथ कथ पुनरिन्द्रियप्रतिपेधेन इन्द्रियलिंग एव मनसि अनिन्द्रियशब्दस्य प्रवृत्तिः ? इति चेत्, ईपदर्थस्य नञः प्रयोगादिति गृहाण, ईपदिन्द्रियमनिन्द्रियमिति, यथा अनुदरा कन्येति।

तद् एतद् मतिज्ञानमुभयनिमित्तमप्येकशश्चतुर्विधम्, तदाह—

पुनस्तद् अवग्रहेहाऽवायधारणाभेदाच्चतुर्विधम् ॥ ७ ॥

यथा स्वमिन्द्रियैर्विषयाणामालोचनमवग्रहः, अवगृहीतस्य निश्चयविशेषजिज्ञासा ईहा, ईहितस्य निश्चयकरणमपायः, अवाय इति वा, निश्चयितस्य मत्यवस्थानमवधारणा, अवग्रहादीना विशेष स्वरूप नन्दी—विशेषावश्यकादिभ्यो ग्रन्थान्तरेभ्योऽवसेयम्, विस्तरभयान्नात्र मीमांस्यते ।

चतुर्णाम् मध्ये कत्यर्थस्य ग्राहका ? इत्याशङ्कायामाह—

चत्वारोऽप्येतेऽर्थस्य ॥ ८ ॥

अवग्रहादयो मतिज्ञानविकल्पा अर्थस्य भवन्तीत्यर्थः।

ननु किमवग्रहादयः सर्वस्येन्द्रियानिन्द्रियस्य भवन्ति ? उत कश्चिद् विषयविशेषोऽस्ति ? इत्यत आह—

व्यञ्जनस्यावग्रह एव ॥ ९ ॥

व्यञ्जनमव्यक्त शब्दादिजातम्-तस्य अवग्रहो भवति । यद्यपि सूत्रस्य एवकार विनैव नियमार्थकता प्रतिपादिता स्यादेव, तथापि स्पष्टता प्रयोजनकमेवेह तस्योपादान ज्ञातव्यम् ।

सर्वेन्द्रियाणामविशेषेण व्यञ्जनावग्रहप्रसङ्गे यत्राऽसभव, तदर्थ प्रतिषेधयन्नाह—

चक्षुरनिन्द्रियाभ्यां नैस्तद्ग्रहः ॥ १० ॥

चक्षुर्मनोभ्या व्यञ्जनावग्रहो न भवति, तयोरप्राप्यकारित्वात् शेषैश्चतुर्भिरिन्द्रियैर्भवतीति भावः ।

दर्शितज्ञानपञ्चके द्वितीय श्रुतज्ञान दर्शयन्नाह—

त्रिकालविषयकं सत् उत्पन्न-विनष्टाऽनुत्पन्नार्थग्राहकतायुत श्रुतज्ञानम् ॥ ११ ॥

यथोक्तलक्षणविशिष्टकेवलादावतिप्रसक्तिवारणाय श्रुतत्वविशिष्टत्वेन विशेषणीयम् । विशेषण-विशेष्ययोर्वस्तुस्थिति प्रदर्शनमात्रपरत्वमवसेयम् ।

श्रुतमाप्तवचनम् ॥ १२ ॥

श्रुतम् आगमज्ञानम् आप्तवचनम्, आप्तस्य रागद्वेषरहितत्वेन जिनवचनमपि आप्तवचनम्। जिनश्च अलौकिकः आप्तः, लौकिकस्तु माता-पितृ-गुरु-वृद्धरूपः । इदमपि लक्षण सुवचम् ।

लक्षणतो निर्दिष्ट श्रुतज्ञानमिदानीं विकल्पतो दर्शयन्नाह-

तन्मतिपूर्वं द्व्यऽनेकद्वादशभेदम् ॥ १३ ॥

तत् श्रुतज्ञान मतिपूर्वं मतिकारणकमित्यर्थः । द्विभेदम्, अनेकभेदम्, द्वादशभेद च । द्विभेद तावत् अङ्गबाह्यम्, अङ्गप्रविष्ट च । अङ्गबाह्यम् अनेकविधम्, दशवैकालिकोत्तराध्ययनादि, अङ्गप्रविष्ट द्वादशविधम्, आचाराङ्गादि-दृष्टिवादपर्यन्तम् । यद्यपि द्विभेदाऽऽन्तरभेदयोरनेक-द्वादशपदयोः सूत्रे उपादान व्यर्थमिव आभाति, तथापि अङ्गबाह्या-ऽङ्गप्रविष्टरूपमूलभेदोपपादकतयैव तस्य साफल्यम् इति सूक्ष्मदृशः । सर्व एव सुशील सर्वश्रुतपाठाधिकारी ।

तार्तीयीकमवधिज्ञान निरूपयति—

अवाग्धानादवच्छिन्नविषयत्वाद्वा अवधिः ॥ १४ ॥

इद व्युत्पत्तिमात्रेण कृतमस्ति तल्लक्षण तु—

अधोविषयकबहुतरवस्तुग्रहणशीलम् अवधिज्ञानम् ॥ १५ ॥

केवल विषयग्राहकत्वस्य उपादाने इतरत्रातिप्रसक्तिः। अतो बहुतरान्तम्। वस्तुतस्तु अवधिज्ञानेन उपरि अधस्ताच्च ज्ञायते, परन्तु देवाः खलु अवधिज्ञानेन सप्तमनरकपर्यन्तमधः पश्यन्ति जानते, स्तोकमूर्ध्वं पश्यन्ति स्वविमानध्वजदण्डपर्यन्तमेव इति रहस्य हृदि निधाय सूत्रोक्त तथालक्षण प्राणायि सूत्रकृता। स पुनः द्विविध भवप्रत्ययः, गुणप्रत्ययश्च। आद्यो देवानां नारकाणां च। द्वितीयस्तु षड्विकल्पात्मकः मनुष्यतिरश्चामिति।

अथ क्रमप्राप्त मनःपर्यायज्ञान निरूपयति—

परकीयमनोगतार्थपरिगमक मनःपर्यायज्ञानम् ॥१६॥

परिगमकत्व बोधकत्वम्, तत् तावन्मात्र तु पूर्ववदितरत्रातिप्रसक्तमतोऽर्थान्तम्। विशेषणमात्रोपादाने परकीयमनोविषयादावतिप्रसङ्ग, तन्निवारणाय च विशेष्यम्।

अथ तद्द्वैविध्य प्ररूपयति—

तद् ऋजुमति-विपुलमति भेदात् द्विविधम् ॥ १७ ॥

तत् मन पर्यायज्ञानम् ऋज्वी मतिर्यस्य तत् ऋजुमति, तथा विपुला मतिर्यस्य तत् विपुलमति-द्विविध-द्विप्रकारम्।

उक्तयोरनयोः पुनरपि विशेषप्रतिपत्त्यर्थमाह—

विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः ॥ १८ ॥

तदावरणक्षयोपशमे सति आत्मन प्रसादो विशुद्धिः। प्रतिपतन प्रतिपात, न प्रतिपातः-अप्रतिपात, ताभ्यां तयोर्विशेषः। अर्थात् विपुलमतिक मन पर्यायज्ञान विशुद्धम्, अप्र-

तिपतनशील च। ऋजुमतिक तु तत् न तथा। इति ऋजुमति-निपुलमत्योर्विशेप इत्यर्थः।

क्रमागत पञ्चम केवलज्ञान लक्षयति—

साक्षात् सकलज्ञेयविषयक केवलज्ञानम् ॥ १९ ॥

ज्ञेयत्व ज्ञेयनिपयता, तद्विपयकत्व तद्विशिष्टत्वम्। सकल ज्ञेयविषयकत्व तु श्रुतज्ञानेऽप्यस्ति. अत उक्तम् 'साक्षात्' इति। एतच्च आत्मनः क्षायिकलब्धिरूपम्।

एव ज्ञानपञ्चक लक्षण-स्वरूपाभ्यां प्ररूप्य तेषा पुनर्विपयप्रदर्शयन्नाह—

मति-श्रुतयोर्निबन्धः सर्वद्रव्येष्वसर्वपर्यायेषु ॥ २० ॥

पूर्वोक्तयोर्मतिश्रुतज्ञानयोर्निबन्धः-सबन्ध' क्व ? इत्याशङ्कायामाह-सर्वद्रव्येषु-जीवादिषु पुनः कथभूतेषु ? असर्वपर्यायेषु, अत्राय भावः-ताभ्या हि आत्मा सर्वद्रव्याणि जानीते. न तु सर्वपर्यायानिति।

तदनन्तरमवधेर्निपय निदर्शयन्नाह—

रूपिष्ववधेः ॥ २१ ॥

निपयनिबन्ध इत्यनुसज्यते। 'रूपिषु' इत्यनेन पुद्गला, पुद्गलद्रव्यसम्बद्धाश्च जीवाः परिगृह्यन्ते, रूपिष्वेवावधेर्विपयनिबन्धो, नाऽरूपिष्विति नियम्यते, स चावधिनिबन्धो रूपिष्वपि भवन् न सर्वपर्यायेषु, किंतु स्वयोग्येष्वेवेत्यवधारणार्थम् 'असर्वपर्यायेषु' इत्यभिसबध्यते।

तदनन्तर मनःपर्यायज्ञानस्य को विपयनिबधः ? इत्यत आह—

तदनन्तभागे मन:पर्यायस्य ॥ २२ ॥

यदेतद् रूपिद्रव्य सर्वमवधिज्ञानविषयत्वेन समर्थित-तस्यानन्तभागीकृतस्यैकस्मिन् भागे मन:पर्याय प्रवर्तते ।

अथ चरमतयोपन्यस्तस्य केवलज्ञानस्य विषयनिब-धनायाह—

सर्वद्रव्यपर्यायेषु केवलस्य ॥ २३ ॥

सर्वद्रव्येषु, सर्वपर्यायेषु च केवलस्य विषयनिबन्धो भ-वति । तद्धि सर्वभावग्राहक सम्भिन्नलोकालोकविषयम्–नातः पर ज्ञानमस्ति, न चास्ति तद् ज्ञेय यन्नावभासते केवलेन–इति । केवल परिपूर्ण शुद्धयनिरपेक्षम्–इत्याद्यपरिमितमाहात्म्य तस्य ।

अत्र विषयनिबन्धोऽवधृतो मत्यादीनाम् इद तु न निर्ज्ञात यद् एकस्मिन्नात्मनि स्वनिमित्तसन्निधानोपजनितवृत्तीनि कति ज्ञानानि भवन्ति ? इत्यत उच्यते—

एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ २४ ॥

एक' आदिर्येषा तानि तथा, भाज्यानि विभक्तव्यानि, यौगपद्येनैकस्मिन्नात्मनि कुत' ? आ चतुर्भ्य –तद्यथा–एक केवलज्ञान, द्वे मतिश्रुते, त्रीणि मति–श्रुतावधिज्ञानानि,मति–श्रुत–मन पर्यायज्ञानानि वा, चत्वारि मति–श्रुताऽवधि–मन.प-र्यायज्ञानानि, न पञ्च सति–केवलस्यासहायत्वात् ।

एव मत्यादिज्ञानपञ्चक निरूप्य स्वपरव्यवसायित्वाज्ज्ञानस्यैव प्रमाणत्व प्रख्यापयन् तत्सख्याप्रदर्शनपुरःसर प्रतिपादयन्नाह—

तत् प्रमाणे ॥ २५ ॥

'तत्' वचन मत्यादिज्ञानपरिग्रहार्थम् प्रमिणोति, प्रमीयतेऽनेन, प्रमितिमात्र वा प्रमाणम् । वक्ष्यमाणभेदापेक्षया द्विवचननिर्देश., तल्लक्षण तु स्वपरव्यवसायित्वम् ।

उक्तस्य पञ्चविधस्य ज्ञानस्य प्रमाणद्वयान्तःपातित्वे प्रतिपादिते, ते च के द्वे प्रमाणे ? इति परिगणयन् आह—

आद्ये परोक्षम् ॥ २६ ॥

अत्र आदौ भवमाद्यम्, इति चेत् कथ द्वयोरेव प्रथमत्वम् ? मुख्योपचारपरिकल्पनया मतिज्ञान तावद्वस्तुतो मुख्यत्वात् प्रथमम्, श्रुतमपि तत्प्रत्यासत्त्या प्रथममित्युपचर्यते । द्विवचननिर्देशसामर्थ्याद्गौणस्यापि ग्रहणम् । आद्य च आद्य च आद्ये मतिश्रुते इत्यर्थः, तदुभयमपि परोक्ष प्रमाणमित्यभिसबध्यते, कुतोऽस्य परोक्षत्वम् ? परायत्तत्वात् ।

अभिहितलक्षणात् परोक्षादितरस्य सर्वस्य प्रत्यक्षत्वप्रतिपादनार्थमाह —

प्रत्यक्षमन्यत् ॥ २७ ॥

प्रत्यक्षम्—उक्तविपरीत प्रत्यक्षपदवाच्य प्रमाणम् अन्यत् अवध्यादित्रितय. कुतोऽस्य प्रत्यक्षत्वम् ? अतीन्द्रियत्वात्, स्वायत्तत्वाच्च इति ।

अथैतत्परोक्ष प्रकारतः प्रकटयति—

स्मरण-प्रत्यभिज्ञान-तर्काऽनुमानाऽऽगमभेदतस्तत् पञ्चप्रकारम् ॥ २८ ॥

स्मरणादिक क्रमशः लक्षयति—

सस्कारप्रबोधसभूतत्वे सति, अनुभूतार्थविषयकत्व स्मृति-

त्व, यथा तत् तीर्थंकरबिम्बमिति, अनुभव-स्मृतिहेतुकत्वे सति सामान्यादिगोचरसंकलनात्मकज्ञानत्वं प्रत्यभिज्ञानत्वं, यथा स एवाय जिनदत्त इत्यादि, उपलम्भानुपलम्भहेतुकं नित्य-साध्य-साधनसम्बन्धविषयकं परस्पर सापेक्षसंवेदनं तर्कः, यथा यावान् कश्चिद् धूम स सर्वोऽपि वह्नौ सत्येव भवति नान्यथा।

अथानुमान द्विप्रकारम् स्वार्थं परार्थं चेति, तत्र स्वार्थानुमान तावत् प्रदर्शयति—

हेतुग्रहण-सम्बन्धस्मरण-कारणकत्वे सति साध्यविज्ञानशालि स्वार्थानुमानम् ॥ २६ ॥

तत्र का नाम हेतुः ? निश्चितान्यथानुपपत्त्येकलक्षणो हि हेतुः।

किं तावत् साध्यम् ? अभीप्सित साध्यम् इति

को हि सम्बन्धः ? अविनाभावो नाम सम्बन्धः।

अथ परार्थानुमान प्ररूपयति—पक्ष-हेतु-वचनात्मक परार्थानुमानम्

पक्षापरपर्याय साध्यविशिष्टो धर्मी।

व्युत्पन्नमतिप्रतिपाद्याभिप्रायेणैतल्लक्षणमिति संक्षेपतः सद्धेतु निरूप्येदानीं हेत्वाभासान्निरूपयति—असिद्ध-विरुद्धाऽनैकान्तिकास्त्रयो हेत्वाभासा इति। को नाम हेत्वाभास ? अनुमिति-तत्करणान्यतरविरोधको हि हेत्वाभासः।

तत्रासिद्धमभिदधति—यस्यान्यथानुपपत्ति प्रमाणेन न प्रतीयते सोऽसिद्ध इति। यथा—परिणामी शब्दः चाक्षुषत्वादिति।

अथ विरुद्ध लक्षयति—साध्यविपर्य्ययेणैव यस्यान्यथानुपपत्तिरध्यवसीयते स विरुद्ध इति । यथा तुरगोऽयं शृङ्गमित्वादिति ।

तृतीयमनैकान्तिकं प्रदर्शयति—यस्यान्यथानुपपत्तिः सन्दिह्यते स अनैकान्तिक इति—यथा पर्वतोऽग्निमान् प्रमेयत्वादिति इति हेत्वाभासाः ॥

अथ क्रमप्राप्त पञ्चमभेदरूपमागम निरूपयति—आप्तवचनादाविर्भूतमर्थसवेदनमागम इति. यथा समस्त्यत्र प्रदेशे रत्ननिधानमिति ।

प्रसङ्गतोऽत्र बहुवक्तव्यमस्ति पर ग्रन्थगौरवभयान्न वितन्यते इति ।

एव ज्ञान निरूप्याज्ञान निरूपयति—

सदसतोरविशेषाद्यदृच्छोपलब्ध्यात्मकमज्ञानम् ॥३०॥

सत् विद्यमानम्, असत् अविद्यमानम्—तयोरविशेषेण—विशेषाभावेन यदृच्छया स्वरुच्या उपलब्धिः—साक्षात्कारः, तदात्मकमित्यर्थः । यावच्च देहाध्यासस्तावत् सर्वस्याऽपि प्राणिनो व्यवहारतो ज्ञानमपि एतत्सूत्रोक्तम् अज्ञानम् । तत् पुनस्त्रिविधम्—मति-श्रुत विभङ्गभेदात् ।

उपयोगानान्तरभेदरूप तार्तीयिक दर्शन निरूपयति—सामान्यप्रधानमुपसर्जनीकृतविशेषार्थग्राहक दर्शनम् ॥३१॥

अत्र निखिल पदकृत्य केवल विशेष्य-विशेषणमानव्यत्यासेन ज्ञानलक्षणोक्तदिशाऽवसेयमिति ।

यथावद्वस्तुनिरूपणप्रवणं सप्रपञ्चं प्रमाणं सक्षेपतः नि-रूप्य तदेकदेशग्राहितया नयान्निरूपयति—

**नैगम सग्रह-व्यवहार ऋजुसूत्र-शब्द समभिरूढ एव-भूता नयाः ॥ ३२ ॥**

तल्लक्षणं तु प्रमाणसगृहीतार्थैकांशबोधकत्वम् । नीयते—प्राप्यते येन श्रुताख्यप्रमाणविषयीकृतस्य पदार्थस्यांशस्तदितरांशौदासिन्यत स प्रतिपत्तुरभिप्रायविशेषो नय इति निर्गलितार्थः ।

स प्रधानतो द्वेधा—द्रव्यार्थिक , पर्यायार्थिकश्चेति । द्रव्य सामान्यम्—उत्सर्गः—अनुवृत्तिरित्यर्थः, तद्विषयो द्रव्यार्थिकः । पर्यायो—विशेष —अपवाद,—व्यावृत्तिरित्यर्थ , तद्विषय: पर्य्यायार्थिक ।

तयोर्भेदाः नैगमादयः सप्त, तत्र द्रव्यार्थिकनयस्य त्रयो भेदाः—नैगम—सग्रह—व्यवहाराख्याः । पर्यायार्थिकस्य चत्वारो भेदा —ऋजुसूत्र—शब्द—समभिरूढ—एवभूतस्वरूपा ।

अत्र सक्षेपतस्तल्लक्षणान्युच्यन्ते ।

निगमेषु येऽभिहिता शब्दास्तेषामर्थः, शब्दार्थपरिज्ञान च तद्रूप एव देश—समग्रग्राही नैगमः ।

अर्थानां सर्वैकदेशसग्रहणं सग्रह ।

लौकिकसम उपचारप्रायो विस्तृतार्थो व्यवहारः ।

सतां साम्प्रतानामर्थानामभिधानपरिज्ञानमृजुसूत्र ।

यथार्थाभिधान शब्द ।

सत्स्वर्थेष्वसक्रमणमभिरूढः ।

व्यञ्जनार्थयोरेवंभूतः। सर्वत्र नयेषु अन्योऽन्यापेक्षाग्राहित्वमिति पूरणीयम्। अत्र विशेषतो नयविवरणं नयरहस्यादिग्रन्थेभ्योऽवगन्तव्यम्।

॥ इति जीवतत्त्वम् ॥

जडताशालिन उपयोगशून्या अजीवाः ॥ ३३ ॥

उपयोगशून्यत्वे सति जडतावत्त्वमजीवलक्षणम्। उपयोगशून्यत्वं नाम उपयोगात्यन्ताभाववत्त्वम्, तेन सुषुप्तिकालावच्छेदेनोपयोगध्वंस-प्रागभाववत्यपि जीवे नातिप्रसङ्गः, इति शेषं स्पष्टम्।

तत्संज्ञाभेदप्रदर्शनार्थमाह—

ते धर्मा-ऽधर्मा-ऽऽकाश-काल-पुद्गलाः पञ्च ॥ ३४ ॥

जीवद्रव्यसहिता ह्येते षड्द्रव्यपदभाजो भवन्ति. द्रव्यलक्षणं तु गुणवत्त्वं पर्य्यायवत्त्वं चेति। द्रव्यं द्रव्यान्तराद् येन विशिष्यते स गुणः। तेषां विकाराः विशेषात्मना भिद्यमाना पर्य्यायाः।

पञ्चानामजीवानां क्रमशः लक्षयितुमुपक्रमते, केवलधर्मपदेनाऽदृष्टग्रहणं मा जायतामतोऽस्तिकाययुतं प्रभूतप्रदेशरूपम् धर्माऽस्तिकायपदवाच्यं द्रव्यं लक्षयति—

अमूर्तोऽसंख्येयप्रदेशशाली गत्युपग्रहकार्यानुमेयो धर्मास्तिकायः ॥ ३५ ॥

आत्मन्यतिवारणाय विशेष्यम्। चरणानिम्नबलादावतिप्रसङ्गवारणाय शान्यन्तं विशेषणम्। पूर्वोक्तहेतुकमधर्मास्तिकायाख्यं द्रव्यं निरूपयति—

अमूर्त्तोऽसंख्येयप्रदेशयुतः स्थित्युपग्रहकार्यानु-मेयः अधर्मास्तिकायः ॥ ३६ ॥

विशेष्यसार्थक्य पूर्ववदेव। युतान्त विशेषण तु आसनादौ समापतन्तीम् अतिप्रसक्ति निषेधति।

क्रमप्राप्त आकाशाख्य द्रव्य निरूपयति—

अमूर्त्तानन्तप्रदेशसहितम् अवकाशोपग्रहकार्या-नुमेयमाकाशम् ॥ ३७ ॥

स्पष्ट चैतत्-अत्र दिशोऽप्याकाशेऽन्तर्भाव, आदित्योद याऽपेक्षया आकाशप्रदेशपङ्क्तिषु 'इत इदम्' इति व्यवहारोप पत्तेरिति दिक्।

काल निरूपयति—

वर्त्तनापरिणाम क्रियाद्युपग्रहकार्यानुमेय काल ॥३८॥

वर्त्तना-वृत्ति सर्वपदार्थाना, सा कालाश्रया। परिणामो विविध अनादिरादिमांश्च। अरूपिष्वनादि, रूपिष्वादिमान् क्रिया तु त्रिविधा-प्रायोगिकी, वैश्रसिकी, मिश्रा चेति, आदि-पदात् कालिकपरत्वाऽपरत्वयोरपग्रहो ज्ञेय।

क्रमप्राप्त पञ्चमभेद पुद्गल निरूपयति—

संख्येयाऽसंख्येयाऽनन्तप्रदेशयुक्ता रूपिण पु-द्गला ॥ ३९ ॥

रूप मूर्त्ति, तदेषामस्ति रूपिण, मूर्तिमन्त इत्यर्थः। अथवा रूपमिति गुणविशेषवचनशब्द, तदेषामस्ति इति ते तथा पुद्गला इति बहुवचन तु तद्भेदप्रतिपादनार्थम्। एते च

पुद्गलाः शरीर-भाषा-मन -प्राण-अपान सुख-दुःख-जीवित-मरणोपकारिण स्पष्टतयैव प्रतीता.। जीवसहितानि च एतानि षड् अपि द्रव्याणि उत्पाद-व्यय-ध्रौव्यभाञ्जि तद्भावाव्ययानि च सन्ति। जीव-धर्मा-ऽधर्मा-ऽऽकाशानि अमूर्तानि, पुद्गलास्तु मूर्त्ता इत्युक्तम्।

नन्वत्र सूत्रे रूपमात्रोपादानेन किं रसाद्यसत्त्वमिति चेन्न, तदविनाभावित्वेन रसादीनामपि यथासम्भवमुक्तप्रायत्वात्।

विशेषतश्च स्वसमयप्रसिद्धा'-अस्तित्वम्, वस्तुत्वम्, सामान्यविशेषात्मकत्वम्, प्रमेयत्वम्, अगुरुलघुत्वम्, प्रदेशत्वम्, चेतनत्वम् अचेतनत्वम्, मूर्तत्वम्, अमूर्त्तत्व चेति सामान्यगुणा दश, प्रत्येकमष्टावष्टौ जीवादिद्रव्याणाम्।

ज्ञान-दर्शन-सुख-वीर्य-स्पर्श-रस-गन्ध-वर्णाः, गतिहेतुत्वम्, स्थितिहेतुत्वम्, अवगाहनहेतुत्वम्, वर्तमानहेतुत्वम्, चेतनत्वम्, अचेतनत्वम्, मूर्त्तत्वम्, अमूर्त्तत्व चेति षोडशविशेषगुणा' द्रव्याणाम्, प्रत्येक जीव-पुद्गलयोः षट्, इतरेषा त्रयो गुणाः, अन्त्याश्चत्वारो गुणा. स्वजाति-विजातिभ्या सामान्यविशेषरूपाश्च। यौ धर्मोऽधर्मौ शुभाऽशुभ-फलप्रसवसमर्थौ तौ च मूर्त्तावेव पुद्गलात्मकत्वात्। अत्र च प्रकरणे पुद्गलग्रहणेन तयोर्ग्रहणमिति नास्ति तद्व्यतिरिक्तत्वाशंका।

ननु गगनविशेषगुणस्य शब्दस्य परिगणितगुणेषु कथमनुपादानम्? इति चेन्न, भाषावर्गणापरमाणुभिरारब्धत्वेन शब्दस्य पौद्गलिकत्वात्। प्रमाण चात्र-' शब्दः पौद्गलिकः इन्द्रियार्थत्वात् रूपादिवदेवेति '। गगनगुणत्व त्वसिद्धम्। तथाहि-' शब्दो न गगनगुण अस्मदादिप्रत्यक्षत्वात् रूपादि-

वत्' इति। भगवता भर्तृहरिणापि स्वीय वाक्यपदीये शब्दस्य अणुजन्यत्व स्वीकृतम्। नातो शब्दा गगनगुण इति। अत्र विषये सविस्तर पूर्वपक्ष भट्टकुमारिलकृताद् श्लोकवार्तिकाद्, उत्तरपक्षश्च समतिप्रकरणाद् अवधेय।

अत्र प्रसङ्गात् सामान्य निरूपयति–सामान्य द्विविधम्, तिर्यक्सामान्यम्, ऊर्ध्वतासामान्य च।

आद्यस्य लक्षणमाह—

प्रतिव्यक्तितुल्या परिणतिस्तिर्यक्सामान्यम्। यथा शव लशावलेयपिण्डेषु गात्वमिति। द्वितीयभेदस्य लक्षणमाह–पूर्वापरपरिणामसाधारणद्रव्यमूर्ध्वता सामान्यम्। यथा कटकक ङ्कणानुगामि काञ्चनमिति। अथ विशेष निरूपयति–विशेषो द्विविध, गुण' पर्यायश्चेति। तत्र गुणाख्यविशेष लक्षयति–सहभावी धर्मा गुण'। यथाऽऽत्मनि विज्ञानशक्त्यादिरिति। द्वितीय पर्यायाख्य विशेष निरूपयति–पर्यायस्तु क्रमभावी, यथा तत्रैव सुख–दु खादिरिति।

अत्र सदसदशात्मकस्य वस्तुन' सदशात्मकभावरूप निरूप्य असदशात्मकभावस्वरूप निरूपयति—

अभावश्चतुर्धा–प्रागभाव, प्रध्वसाभाव, इतरेतराभाव, अत्यन्ताभावश्च ॥ ४१ ॥

क्रमशश्चतुरोऽपि अभावान्निरूपयितुमाह—यन्निवृत्तावेव कार्यस्य समुत्पत्ति सोऽस्य प्रागभाव। यथा मृत्पिण्डनिवृत्तावेव समुत्पद्यमानघटस्य मृत्पिण्ड'। यदुत्पत्तौ कार्यस्याऽवश्य विच्छेद' सोऽस्य प्रध्वसाभाव, यथा कपालकदम्बकोत्पत्तौ नियमतो विपद्यमानस्य कलशस्य कपालकदम्बकम्।

स्वरूपान्तरात् स्वरूपव्यावृत्तिरितरेतराभाव', यथा स्तम्भस्व-भावात् कुम्भस्वभावव्यावृत्तिः । कालत्रयापेक्षिणी तादात्म्यप-रिणामनिवृत्तिरत्यन्ताभाव' । यथा चेतनाऽचेतनयोः—चेतने अचेतनात्यन्ताभाव अचेतने चेतनात्यन्ताभाव इति दिक् ।

ननु ' अस्तिकाय ' इति कोऽर्थ' ? अस्तिकायो नाम प्रभूतप्रदेशसमूह' । जीवादिषु द्रव्येषु कस्य कति प्रदेशाः ? इति तु तत्तद्द्रव्यलक्षणे एव लक्षितमिति नेह प्रतन्यते ॥

॥ इति अजीवतत्त्वम् ॥

जीवा-ऽजीवसयोजक तृतीयमास्रवतत्त्व निरूपयितु तस्य योगोपन्यासमूलत्वादादौ योगस्वरूप प्ररूपयन्नाह—

कायवाङ्मनःकर्म योगः ॥ ४१ ॥

कोऽसावत्र योगः ? इति चेच्छृणु—आत्मप्रदेशपरिस्पन्दो योगः । स च त्रिविधः—उक्तसज्ञाभेदात् ।

तत्र काययोग लक्षयति—गमनादिक्रियाहेतुत्वे सति कायात्मपरिणामरूपत्वम् ।

वाग्योग प्रदर्शयति—उच्चारणक्रियाहेतुत्वे सति भाषा-योग्यपुद्गलात्मप्रदेशपरिणामरूपत्वम् ।

अन्तिममनोयोग प्ररूपयति—विकल्पादिक्रियाहेतुत्वे सति मननयोग्यपुद्गलात्मप्रदेशपरिणामरूपत्वमिति ।

किंच कायिक कर्म, वाचिक कर्म, मानसिक कर्म इत्येव त्रिधा योगः ।

अथ तन्मयमेव कायादिस्वरूपतापन्नससारिपुरुषसबन्धि क्रियाकलापादभिन्नमास्रव दर्शयन्नाह—

स आस्रवः ॥ ४२ ॥

तच्छब्देन कायादियोगपरामर्श । कर्मणोरास्रवणादास्रव इति व्युत्पत्त्या प्रतिपाद्य तल्लक्षणमाह–आत्मसमवेतकृतिजन्यकर्मविषयक्रियात्मकत्वमास्रवस्य लक्षणम् । स द्विविध.- शुभ: अशुभश्च । तत्राशुभा हिंसा–स्तेयाऽब्रह्मादीनि कायिक, मायद्यानृतपरुषपिशुनादीनि वाचिक । अभिध्याव्यापादेर्ष्याऽसूयादीनि मानस । अतो विपरीत शुभ इति ।

यस्मिन् सति त्रिविधास्रवप्रवृत्तिस्तदधिकरणमनिर्धारितमतस्तन्नेदनिर्दिधारयिषयदमाह—

**अधिकरण जीवाजीवा' ॥ ४३ ॥**

अधिकरण कस्य ? इति जिज्ञासायाम् आस्रवस्येति पूरणीयम् ।

॥ इत्यास्रव ॥

सति द्वाररूपे तस्मिन् आश्रवे सभवो बन्धस्येत्यभिसधाय चतुर्थतम बन्ध निरूपयितु हेतुनिर्देशपुर सर लक्षणमाह—

**मिथ्यादर्शनादिजन्यकर्मवर्गणायोग्यस्कन्धाऽऽत्मप्रदेशयोरन्योन्याऽनुगतिमत्त्व बन्ध. ॥ ४४ ॥**

आदिपदादविरतिप्रमादकषाययोगाना परिग्रह । मिथ्यादर्शन नाम देहाध्यासरूपम्, अविरतिस्तु हिंसादिष्वनिवृत्तिरूपा, प्रमाद पुन कुशलेष्वनादर कषायस्तावत् क्रोध–मान–माया–लोभाख्या', योगा पूर्वोक्तकायादिविकल्पा', ।

ननु बन्ध किमेकरूप ? उतानेकरूप ? इत्यत आह—

**प्रकृति–स्थित्यऽनुभावप्रदेशास्तद्विधय' ॥ ४५ ॥**

स्वभावादप्रच्युति स्थिति –यथा महिष्यादिक्षीराणा मधुरत्वम् ।

प्रकृति स्वभाव यथा निम्बस्य तिक्तता।

यावत्काल तद्रसविशेषोऽनुभागः, यथा अजागोमहिष्यादिक्षीराणां तीव्रमन्दादिभावेन रसविशेषः।

इयत्तावधारण प्रदेश। विधिशब्दः प्रकारवाचकः, अत्र विशेषस्वरूप तु 'कम्मपयडी' आदिग्रन्थेभ्योऽवसेयम्।

॥ इति बन्ध ॥

पूर्वकर्मानवयवप्रदेशनिवारक क्रमप्राप्त संवर दर्शयति—

आस्रवनिरोधः संवर ॥ ४६ ॥

अभिनवकर्मोपादानहेतुरास्रव' पूर्वं व्याख्यात., तन्निरोधो नाम प्रतिबन्ध, स च संवर, तल्लक्षण निरूपयति—

आत्मनिष्ठकर्मग्रहणहेतुभूतपरिणामाभाववत्त्वम् ॥ ४७ ॥

संवृणुते इति संवरः, तदुत्पत्तिस्तु गुप्ति-समिति-धर्मा-ऽनु-प्रेक्षा-परिषहजय-चारित्रैः, तपसा, निर्जरया च।

गुप्त्यादिनिर्वचनमाह-समारकारणादात्मनो गोपन गुप्तिः, प्राणिपीडापरिहारार्थं सम्यगऽयन समिति, इष्टस्थाने धत्ते इति धर्मः, शरीरादीनां स्वभावानुप्रेक्षणमनुप्रेक्षा, क्षुधादिवेदनोत्पत्तौ कर्मनिर्जरार्थं तत्सहन परिषहजयः, चारित्र प्रसिद्धमेव, तथैव तपो द्वादशप्रकारमुल्लक्षणम्, निर्जरा तु द्विप्रकारा समनन्तरमेवोच्यते।

अथ क्रमप्राप्ता निर्जरां निरूपयति—

कर्मपरिशाटन निर्जरा ॥ ४८ ॥

आत्मप्रदेशानुभूतकर्मपुद्गलविनाशरूपा निर्जरा सा द्विधा-विपाकजा, अविपाकजा च, आद्या तावच्चतुर्गतावनेकजातिविशेषावघूर्णिते संसारमहार्णवे चिरं परिभ्रमतः आत्मनो या शुभाशुभकर्मणः परिपाककालप्राप्तस्याऽनुभवोदयावलिस्रोतोऽनुप्रविष्टस्य आरब्धफलस्य च या निवृत्तिः सा विपाकजा निर्जरा

अन्त्या तु यत् कर्म अप्राप्तविपाककालमौपक्रामिकक्रियाविशेषसामर्थ्यादनुदीर्णं बलादुदीर्योदयावलिं प्रवेश्य वेद्यते आम्र-पनसादिपाकवत्, साऽविपाकजा निर्जरेति ।

॥ इति निर्जरा ॥

सकलतत्त्वज्ञानफलं मोक्षं निरूपयितुमाह—

कृत्स्नकर्मक्षयो मोक्षः ॥ ४६ ॥

कृत्स्नानां-सर्वेषाम् अष्टानां कर्मणां क्षयः-नाशः स एव मोक्षः-चतुर्विधपुरुषार्थेषु मुख्यफलरूप इत्यर्थः । परमयोगिनामपि दुर्लभः-स्वस्वरूपावस्थानं त्रिकालाऽबाधितमिति यावत् ।

इति प्रकीर्णकाण्डम्



## अथ समन्वयकाण्डम्

हहो ! किमिद समन्वयकाण्डम्, कश्च समन्वयः ? केषा च समन्वयः ? किमर्थं चेतत् प्रतन्यते ? इति

उच्यते, शृणु सावधानतया–

" षण्णा विरोधोऽपि च दर्शनाना तथैव तेषा शतशश्च भेदाः ।
नानापथे सर्वजनः प्रवृत्तः को लोकमाराधयितुं समर्थः ॥ "

इति केनचित् पण्डितमन्येन आत्मविकासोपायवृत्तापरायणानामपि सर्वेषा प्राचा दर्शनाना परस्पर विरोधमुद्भाव्य व्युद्ग्राहितो लोको नाऽद्यावधि कल्याणपथ प्राप्तुम्, निरीक्षितुम्, विचारयितुम् वा क्षमः, प्रत्युत तैरेव शिवसाधकदर्शनैः परस्पर कलहायमानः–प्रायः कषायवृद्धिमेव वितन्वानोऽधोगतिमेव प्रयाति–इति, तद्बोधनिमित्त तेषा षण्णामपि दर्शनानां समन्वयं प्रचिकटिषुर्ग्रन्थकार इद नवीनमेव प्रकरण प्रकाशते––

लोकेऽपि श्रूयते, प्रत्यक्ष्यते च वैद्यशालायाम्–यत् समागतेषु अनेकेषु ज्वराक्रान्तेषु, वैद्यस्तान् सकलानपि ज्वरिणः परीक्ष्य प्रकृतिभेदेन विविधमौषधम्, विविध पथ्यं च प्रदर्शयति. ततो न ते रोगिणः क्वापि कदाचित् परस्परम् औषधभेदेन, पथ्यभेदेन वा कलहयन्ति, वैद्याय वा शपन्ति अथवा इदमेव औषध वरम्, इद च न वरम् इति परस्पर विवदन्ते, अथवा गणितशालाया अनेके गणितशास्त्रिणः चतुर्विंशति–सङ्ख्यासाधने प्रवृत्ताः ' आठ तेरी चोवीश ' ' छ चोक चोवीश ' ' त्रण अट्ठा चोवीश ' ' चार छक चोवीश ' ' बार दु चोवीश ' एवम् अनेकरीत्या चतुर्विंशतिं साधयन्ति. एवं माध-

यमानाश्च मात्ररीतिप्रभेदावलम्बनेनैव न कदाचिदपि विवदन्ते परम् असत्यापयन्ति वा, एवमेव महर्षीणां संनिधाने समागतेषु विविधेषु मोहज्वराक्रान्तेषु तैस्तैः महर्षिभिः तेषां मोहज्वरं परीक्ष्य दत्तानि–इमानि दर्शनानि औषधरूपाणि, तदनुष्ठानानि च पथ्यरूपाणि प्रदर्शितानि इति तत्र कः कलहः–कश्च विरोध इति ।

पुनश्च इमानि सर्वाणि दर्शनानि भावनारूपीणि–इति यस्य मुमुक्षोर्या समनुकूला भावना स तामाश्रित्य, अनुशील्य च आत्मबोधम्–भेदज्ञानम्–विवेकख्यातिं प्राप्नुयात्, न तत्र संदेहः तथाहि—

प्रकृति–पुरुषौ मन्वानाः सांख्याः–यदि एवमेव अभ्यस्यन्ति–निश्चिन्वन्ति–च–यद्–न करोत्येष किञ्चित्, एतत्तु विभावादिकं सर्वं परिस्पन्दनं प्रकृतिव्युद्ग्राहितमेव, ततस्तेषां कथं देहभेदेऽपि विभावोत्पत्तिः, कषायवृद्धिः देहाध्यासो वा स्यात्–सांख्यदर्शनविहिततत्त्वपद्धतिमवलम्बमानस्य प्रवृत्तौ समाचरतश्च मुमुक्षोः देहाद्यध्यासाऽभावे अवश्यमेव आत्मपथप्राप्तिः—स्वरूपावस्थानं च भवेत्–इति स्वदर्शनानुकूलं समाचरन्तः सांख्या कैरपि सख्यावद्भिः कथमाक्षेप्तु योग्याः—

तथा च भगवान् हरिभद्रः —

" एवं प्रकृतिवादोऽपि विज्ञेयः सत्य एव हि,
कपिलोक्तत्वतश्चैव दिव्यो हि स महामुनिः " ॥४४॥

( शास्त्रवार्ता०–स्तबकं तृतीयं )

लोकेऽपि न हि कदापि दुग्धभोजिना शाकभोजी आक्षिप्यते, शाकभोजिना वा दुग्धभोजी आक्षिप्यते–यथाहि—

" यत्रैव यस्य शक्तिः साम्य च विशेषतस्तेषाम् ॥ ४ ॥
स तमाराधयितुमल यस्मादाराध्य चैनमाप्नोति ।
शक्त्यन्तर ह्युपायान्तरसाधकमुत्तम नियमात् " ॥ ५ ॥

एता श्रीअनेकान्तजयपताकागता श्रीहरिभद्रोक्तिमविस्मृत्य व्यावहारिका परस्पर व्यवहरन्ति, प्रवर्तन्ते च । तथैव सर्वैरपि दार्शनिकैः तदनुगामिभिश्च नैषा क्षणमपि विस्मर्तु योग्या इति.

तैरेव भगवद्भिः श्रीहरिभद्रैः स्वीयग्रन्थे अन्यत्राऽपि प्रोक्तम्—

" अविद्यासगताः प्रायो विकल्पाः सर्व एव यत् ।
तद्योजनात्मकश्चैष कुतर्कः किमनेन तत् ॥ ६० ॥
जातिप्रायश्च सर्वोऽय प्रतीतिफलबाधितः ।
हस्ती व्यापादयत्युक्तौ प्राप्ता-प्राप्तविकल्पवत् ॥ ६१ ॥
बोधरोगः शमापायः श्रद्धाभङ्गोऽभिमानकृत् ।
कुतर्कश्चेतसो व्यक्त भावशत्रुरनेकधा ॥ ९२ ॥
कुतर्केऽभिनिवेशस्तन्न-युक्तो मुक्तिवादिनाम् ।
युक्तः पुनः श्रुते शीले समाधौ च महात्मनाम् ॥ ६३ ॥
चित्रा तु देशनैतेषा स्याद् विनेयानुगुण्यतः ।
यस्मादेते महात्मानो भवव्याधिभिषग्वराः ॥ १३२ ॥
( एतेषा सर्वज्ञाना कपिल-सुगतादीनाम्—टी० )
यस्य येन प्रकारेण बीजाधानादिसभव' ।
सानुबन्धो भवत्येते तथा तस्य जगुस्तत' ॥ १३३ ॥
एकाऽपि देशनैतेषा यद् वा श्रोतृविभेदत' ।
अचिन्त्यपुण्यसामर्थ्यात् तथा चित्राऽवभासते ॥ १३४ ॥

यथाभव्य च सर्वेषा-मुपकारोऽस्ति तत्कृत. ।
जायतेऽबन्ध्यताऽप्येव-मस्याः सर्वत्र सुस्थिता ॥ १३५ ॥

यद्वा तत्तन्नयापेक्षा तत्कालादिनियोगत ।
ऋषिभ्यो देशना चित्रा तन्मूलैषाऽपि तत्त्वत' ॥ १३६ ॥

तदभिप्रायमज्ञात्वा न ततोऽर्वाग्दृशा सताम् ।
युज्यते तत्प्रतिक्षेपो महानर्थकरः पर ॥ १३७ ॥

निशानाथप्रतिक्षेपो यथाऽन्धानामसगतः ।
तद्भेदपरिकल्पश्च तथैवाऽर्वाग्दृशामयम् ॥ १३८ ॥

न युज्यते प्रतिक्षेपः सामान्यस्याऽपि तत् सताम् ।
आर्यापवादस्तु पुनर्जिह्वाच्छेदाधिको मतः ॥१३९॥

कुदृष्ट्यादिवद् नो सन्तो भाषन्ते प्रायशः क्वचित् ।
निश्चित सारवच्चैव किन्तु सत्त्वार्थकृत् सदा ॥ १४० ॥

निश्चयोऽतीन्द्रियार्थस्य योगिज्ञानाद् ऋते न च ।
अतोऽप्यत्रान्धकल्पाना विवादेन न किंचन ॥ १४१ ॥

न चाऽनुमानविषय एषोऽर्थस्तत्त्वतो मत ।
न चातो निश्चय' सम्यग् अन्यत्राऽप्याह धीधन ॥१४२॥

यत्नेनानुमितोऽप्यर्थ. कुशलैरनुमातृभि ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ १४३ ॥

ज्ञायेरन् हेतुवादेन पदार्था यद्यतीन्द्रियाः ।
कालेनैतावता प्राज्ञै कृत. स्यात्तेषु निश्चय ॥ १४४ ॥

न चैतदेव यत् तस्मात् शुष्कतर्कग्रहो महान् ।
मिथ्याऽभिमानहेतुत्वात् त्याज्य एव मुमुक्षुभि. ॥ १४५ ॥

ग्रह सर्वत्र तत्त्वेन मुमुक्षूणामसगत. ।
मुक्तौ धर्मा अपि प्रायस्त्यक्तव्या किमनेन तत् ॥ १४६ ॥

तदत्र महता वर्त्म समाश्रित्य निचक्षणैः
वर्त्तितव्य यथान्याय तदतिक्रमवर्जितैः ॥ १४७ ।

परपीडेह सूक्ष्माऽपि वर्जनीया प्रयत्नत. ।
तद्वत् तदुपकारेऽपि यतितव्य सदैव हि ॥ १४८ ॥

गुरवो देवता विप्रा यतयश्च तपोधना' ।
पूजनीया महात्मान' सुप्रयत्नेन चेतसा ॥ १४९ ॥

पापवत्स्वपि चात्यन्त स्वकर्मनिहितेष्वलम् ।
अनुकम्पैव सत्त्वेषु न्याय्या धर्मोऽयमुत्तमः ॥ १५० ॥

—योगदृष्टिसमुच्चय पृ ४३-४४-४५-५८-६४

( शेठ देवचदलालभाईवाळी आवृत्ति )

अनयैव दिशा अथ नैयायिकदर्शनसमन्वयो दर्श्यते महर्षिणा हि अक्षपादेन धीमता अमूनि षोडश तत्त्वानि प्रतिष्ठापितानिः—

" तत्त्वानि षोडशाऽमुत्र प्रमाणादीनि तद्यथा,—
प्रमाण च प्रमेय च सशयश्च प्रयोजनम् ॥ १४ ॥
दृष्टान्तोऽप्यथ सिद्धान्तोऽवयवास्तर्क-निर्णयौ,
वादो जल्पो वितण्डा च हेत्वाभासाश्छलानि च ॥१५॥
जातयो निग्रहस्थानान्येषामेव प्ररूपणा " ।

एषाऽपि प्ररूपणा न कथमपि विरोधबन्धगन्धमपि समुपैति यत.—अत्र प्रमेये एव जीव-मोक्षादीना समन्तर्भावः—अन्यानि च तत्त्वानि केवल प्रमाणरूपवृक्षस्य शाखा-प्रशाखा-पुष्प-फल-कण्टकरूपाणि प्रमाणे एव अन्तर्भावयितु शक्यानि अपि बालजनप्रस्फोटार्थम् अनेन दयापरेण गौतममहर्षिणा नामग्राहम्, सस्वरूप च निर्दिष्टानि इति कथमत्र केषामपि

प्रामाणिकानां विरोधोत्थानम्-प्रामाणिके प्रमाणतत्त्वे परिगृहीते एव एतानि तत्र समायान्ति-इति अवदद्भिरपि तैः तानि स्वीकृतप्रायाण्येव

तथा "आत्म-शरीर-इन्द्रिया-ऽर्थ-बुद्धि-मन -प्रवृत्ति-दोष-प्रेत्यभाव-फल-दु ख-अपवर्गभेदेन द्वादशविध तत्" इति प्रमेय प्रणिमिमान' ऋषिवरो गौतमोऽपि न जैनीं प्रमेयवादरीतिं विरोधयति केवलमत्र तयोर्भाषाभेद एव विरोधकारण प्रतिभाति । एव गौतमीये मोक्षस्वरूपव्याख्यानेऽपि न जैनाना विरोधलवोऽपि । तथाहि—" निरन्तरशास्त्राभ्यासात् कस्यचित् पुसस्तत्त्वज्ञान जायते-तेन च मिथ्याज्ञाननिवृत्तिर्विधीयते, तस्य निवृत्तौ तत्कार्यभूता रागादयो निवर्तन्ते, तदभावे तत्कार्या मनोवाक्कायप्रवृत्तिर्व्यावर्तते, तद्व्यावृत्तौ च धर्मा-ऽधर्मयोरनुत्पत्ति × × × ततश्च सर्वसतानोच्छेदाद् मोक्ष इति स्थितम् "

तथा—

" यावदात्मगुणा' सर्वे नोच्छिन्ना वासनादय' ।<br>
तावदात्यन्तिकी दु खव्यावृत्तिर्न विकल्प्यते ॥<br>
धर्माऽधर्मनिमित्तो हि सभव सुखदु खयो ।<br>
मूलभूतौ च तावेव स्तम्भौ ससार सद्मन ॥<br>
तदुच्छेदे च तत्कार्यशरीराद्यनुपप्लवात् ।<br>
नात्मनः सुखदु खे स्तः इत्यसौ मुक्त उच्यते ॥<br>
ननु तस्यामवस्थायां कीदृगाऽऽत्माऽवशिष्यते ? ।<br>
स्वरूपैकप्रतिष्ठान' परित्यक्तोऽखिलैर्गुणैः ॥<br>
ऊर्मिषट्कातिग रूप तदस्याहुर्मनीषिण ।<br>
ससारबन्धनाधीनदु खक्लेशाद्यदूषितम् ॥<br>
( ऊर्मय' काम-क्रोध-मद-गर्व-लोभ-दम्भा' ) "

अत्र लक्षणे आत्मगुणशब्देन त एव तद्गुणा ग्राह्याः, ये कर्मजाः स्युः–तेषां च छेदः " कृत्स्नकर्मक्षयो मोक्षः " इति लक्षयता जैनानामपि अभिप्रेत एव–इति गौतमोऽपि महर्षिर्न जैनदर्शनेन विरोधभाव बिभर्ति ।

तथा च परमर्षिर्हरिभद्रः—

ससारातीततत्त्वं तु परं निर्वाणसंज्ञितम् ।
तद्ध्येकमेव नियमाच्छब्दभेदेऽपि तत्त्वतः ॥ १२७ ॥
सदाशिवः परं ब्रह्म सिद्धात्मा तथतेति च ।
शब्दैस्तदुच्यतेऽन्वर्थादेकमेवैवमादिभिः ॥ १२८ ॥

—( योगदृष्टिसमुच्चय )

यच्च ' सृष्टिसहारकृत् शिवः ' इति तेषां भावनं तत् तु नात्मविकासे विघ्नरूपम्, प्रत्युत केषाचित् प्राणिनां ' नाहं करोमि, नाह सहरामि, किंतु शिव एव सकलं कलयति ' इति भावनया देहाध्यासच्छेदकम्, अत एव उपयोगिभावनारूपत्वेन तर्काऽविषयत्वेन च अन्या भावना इव सा भावनाऽपि न खण्डयितुमिष्टाऽस्माकम् ।

संवदन्ति च महर्षयो हरिभद्राः—

" ईश्वरः परमात्मैव तदुक्तव्रतसेवनात् ।
यतो मुक्तिस्ततस्तस्याः कर्ता स्याद् गुणभावतः ॥११॥
तदनासेवनादेव यत् ससारोऽपि तत्त्वतः ।
तेन तस्यापि कर्तृत्वं कल्प्यमानं न दुष्यति ॥१२॥
कर्त्ताऽयमिति तद्वाक्ये यतः केषाचिदादरः ।
अतस्तदानुगुण्येन तस्य कर्तृत्वदेशना ॥ १३ ॥

परमैश्वर्ययुक्तत्वाद् मत आत्मैव ईश्वरः ।
स च कर्तेति निर्दोष. कर्तृवादो व्यवस्थितः ॥ १४ ॥
शास्त्रकारा महात्मान' प्रायो वीतस्पृहा भवे ।
सत्यार्थमप्रवृत्ताश्च कथ तेऽयुक्तभाषिण ॥ १५ ॥
अभिप्रायस्ततस्तेषा सम्यग्मृग्यो हितैषिणा ।
न्यायशास्त्राऽविरोधेन यथाह मनुरप्यद ॥ १६ ॥
आर्ष च धर्मशास्त्र च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसधत्ते स धर्म वेद नेतरः ॥ १७ ॥

( शास्त्रवार्त्ता॰ स्तबक ३ )

इति गौतममतसमन्वय. ।

अथ बौद्धदर्शनसमन्वय' ।

" सुगतः किल—

चतुर्णामार्यसत्याना दु खादीना प्ररूपक ॥ ४ ॥
दु'ख ससारिणः स्कन्धास्त च पञ्च प्रकीर्तिता ।
विज्ञान वेदना सज्ञा सस्कारो रूपमेव च ॥ ५ ॥

रूपविज्ञानम्, रसविज्ञानम्, × इत्यादि × विज्ञान-स्कन्ध । सुखा, दुःखा अदुःखसुखा चेति वेदनास्कन्ध' । सज्ञानिमित्तोद्ग्रहणात्मक. प्रत्यय सज्ञास्कन्ध ।पुण्य–अपुण्या-दिधर्मसमुदाय सस्कारस्कन्धः " ( इति दु.खम् )

" समुदेति यतो लोके रागादीना गणोऽखिलः ।
आत्मात्मीयभावाख्यः समुदय स उदाहृत ॥ ६ ॥
क्षणिका. सर्वसस्कारा इत्येव वासना यका ।
स मार्ग इह विज्ञेयो निरोधो मोक्ष उच्यते " ॥ ७ ॥

" चित्तस्य नि क्लेशावस्थारूपो निरोधो मुक्तिर्निगद्यते "
इति षड्दर्शनसमुच्चय.

एतदपि दु ख-समुदय-मार्ग-निरोधलक्षणं वैराग्यवर्धकं बौद्धमत न कथमपि ज्ञातपुत्रशासनेन विरोधभाव निर्मति-इति सुविचारमेव।

किञ्च-यैरत्र बौद्धशासने अनात्मवादः समारोपितः ते तु बौद्धसमत आत्मशब्दवाच्यमेव न जानन्ति यथा जैनशासने 'द्रव्यात्मा' 'कषायात्मा' इत्येतौ शब्दौ यम्-यादृशम् आत्मान सूचयत, तथैव तेषा बौद्धाना क्षणनश्वरपक्षगत आत्मशब्दस्तमेव भाव सूचयति. ये बौद्धा[१] निर्वाणवादिनः, ते न कथमपि अनात्मवादिनो भवेयुरिति, यच्च भगवतो बुद्धस्य राज्यादित्यागादिकम्, तदपि आत्मवादमेव समर्थयति-इत्येतद् बालसुगमम्, एतच्च अस्माक कथन मज्झिमनिकाय-

१—" छयिमानि भिक्खवे दिट्ठिट्ठानानि, कतमानि छ ? इध भिक्खवे अस्सुतवा पुथुज्जनो सप्पुरिसधम्मे अविनीतो रूप एत मम, एसोऽहमस्मि, एसो मे अत्ता ति समनुपस्सति, वेदन एत मम, एसोऽहमस्मि, एसो मे अत्ता ति समनुपस्सति, सखारे एत मम एसोऽहमस्मि एसो मे अत्ता ति समनुपस्सति य पिद दिट्ठ, सुत, मुत, विञ्ञात, पत्त, परियेसित, अनुविचरित मनसा त पि एत मम एसोऽहमस्मि, एसो मे अत्ता ति समनुपस्सति " इत्यादिना मज्झिमनिकाय ( सूत्र २२,८, पृ ६६-६७ रा० ) ग्रन्थगतपाठेन अत्रत्य-आत्मशब्दवाच्यस्य जैनपरिभाषाप्रसिद्ध द्रव्यात्मत्वम्-कषायात्मत्वादिकम्-सुप्रतीतमेव।

तथा—

" कतमा चावुसो पठवीधातु ? पठवीधातु सिया अज्झत्तिका सिया, बाहिरा सिया × × × या चेव खो पन अज्झत्तिका पठवीधातु या च बाहिरा पठवीधातु-पठवीधातुरेव ता त नेत मम,

धम्मपदप्रभृतिपालिभाषानिबद्ध ग्रन्थावलोकन-मनन-चिन्तनै' पण्डितानां अवश्यमेव विग्वसनीय भविष्यति इति ते ग्रन्थास्तै स्वयम् अवलोकनीया इति

यच्च तेषा प्रमाणादिव्यवस्थापनम्, तत्तु जिज्ञासुरुचिसमनुकूलतया पूर्वनदेव समन्वेतव्यम्-इति अन्यान्यदर्शनपद्धतिरिव बौद्धपद्धतिरपि अवश्यमेव तदनुसाराचारशालिना निकासकरी-इति नाऽत्र मतद्वयमस्माकम् । तथा च समर्थित पूज्यपादैर्हरिभद्रैरपि--

" विज्ञानमात्रमप्येव बाह्यसगनिवृत्तये ।
विनेयान् कांश्चिदाश्रित्य यद्वा तद्देशनार्हत ॥ ५२ ॥
न चैतदपि न न्याय्य यतो बुद्धो महामुनिः ।
सुवैद्यवद् विना कार्यं द्रव्यासत्य न भाषते ॥ ५३ ॥
एव च शून्यवादोऽपि तद्विनेयानुगुण्यत' ।
अभिप्रायत इत्युक्तो लक्ष्यते तत्त्ववेदिना " ॥ ६४ ॥

( शास्त्रवार्ता० स्तबक ६ )

इति बौद्धमतसमन्वय । एवमेव मुमुक्षुभि' माध्यस्थ्यमास्थाय अवगम्य चेमा हारिभद्रीं वार्त्ताम् ( सा च—

---

नेसोऽहमस्मि, न मे सो अत्ता ति एवमेत यथाभूत सम्मप्पञ्ञाय दट्ठ"व " इत्यादि-(म सू २८,४ पृ १३१ रा० ) मज्झिमनिकायगतपाठेन आत्मशब्दवाच्यस्य चिदात्मरूपत्वम्, शरीरभिन्नत्व च सववान्सिमत भगवता बुद्धेनाऽपि सुस्पष्टितमव

तथा—

२—" अप्पमादो अमतपद पमादो मच्चुनो पद ।
अप्पमत्ता न मीयति ये पमत्ता यथा मता ॥ १ ॥

( अप्पमादवग्ग )

" अन्ये व्याख्यानयन्त्येव समभावप्रसिद्धये ।
अद्वैतदेशनाशास्त्रे निर्दिष्टा न तु तत्त्वतः" ) ॥ ८ ॥
( शास्त्रवा० स्त ८ )

ब्रह्ममायाप्ररूपक वेदान्ततत्त्वम्, योगदर्शनप्रचित श्रीयोगिप्रवरपतञ्जलिमतम्, भूतवादेन च ससारासारतां समर्थयद् भगवतो बृहस्पते मत च समन्वय सगमनीयमिति ।

उपर्युक्तरीत्या षण्णामपि दर्शनाना परस्परविरुद्धत्वे समूलकाप कषिते श्वेताम्बर-दिगम्बर-स्थानकवासिप्रभृतिसम्प्रदाय-

सब्बे तसति दण्डस्स सब्बे भायति मच्चुनो ।
अत्तान उपम कत्वा न हनेय्य न घातये ॥ १ ॥ ( दण्डवग्ग )
अत्तान चे पिय जञ्ञा रक्खेय्य न सुरक्खित ।
तिण्णमञ्ञतर याम पटिजग्गेय्य पण्डितो ॥ १ ॥
अत्तानमेव पठम पतिरूपे निवेसये ।
अथऽञ्ञमनुसासेय्य न किलिस्सेय्य पण्डितो ॥ २ ॥
× × ×
अत्ता हि अत्तनो नाथो को हि नाथो परो सिया ? ।
अत्तना हि सुदत्तेन नाथ लभति दुल्लभ ॥ ४ ॥
अत्तना हि कत पाप अत्तज अत्तसभव ।
अभिमन्थति दुम्मेध वजिर वऽस्महमय मणि " ॥ ५ ॥
( अत्तवग्ग )

इत्यादि धम्मपदगाथागणो भगवतो बुद्धस्य आत्मवादमेव स्थापयन निर्वाणवादिवरेण्यत्व सूचयति-इति भगवति बुद्धे, तदुपदेशे वा अनात्मवादारोपण यत् परै कृत तत् समूलमेव बौद्धशास्त्रेणैव उन्मूलितमिति दिक्

१ जुओ नमिनाथस्वामिनु स्तवन—"षड दरिसण जिन अग भणीज" इत्यादि—(आनदघन चोवीशी) तथा " राम कहो रहमान कहो" ए पद—(आश्रमभजनावली)

विरोध' कथ क्षणमपि स्यातु शक्नुयात् । यथा भिन्नभिन्नानि शरीराणि अधिष्ठाय लोका लौकिक मार्गम् अविवदमाना एव साधयन्ति, तथा आध्यात्मिकधर्मकलेवरप्रायान् एतान् सम्प्रदायानपि सम्प्राप्य निर्वैरिन' मध्यस्था', धर्मपथ च प्राप्तु-कामा स्वविकास साधयिष्यन्ति । अन्ये च मूढा सम्प्रदाय भूतग्रस्ताः ' न साधुना वस्त्राणि परिधेयान्येव ' ' साधुना वस्त्रसचय एव विधातव्य ' ' मूर्त्ति पूजनीया एव ' ' मूर्त्तिर्न पूजनीया एव ' इत्यादिके स्वकुटुम्बक्लेशसमाने धर्मक्लेशे स्वात्मान निक्षिप्य, श्रीभगवद्‌महावीरप्रोक्तमपि नयवाद तिरस्कृत्य किं करिष्यन्ति, क्व यास्यन्ति इति त एव जानीयु' । तथा च तान् तादृशान् प्रायो गुर्वाभासानपि वर्तमानान् धर्मगुरून् उद्दिश्य भगवान् आनन्दघनोऽपि शिक्षयति ।

" भद्द मिच्छद्दसणसमूहमइअस्स अमयसारस्स ।
जिणवयणस्स भगवओ सवेगसुहाहिगम्मस्स " ॥ ७० ॥

( भद्र मिथ्यादर्शनसमूहमयस्य अमृतसारस्य ।
जिनवचनस्य भगवत सवेगसुखाधिगम्यस्य ॥ )

—( सम्मतितर्कप्रकरणे तृतीयकाण्डे
श्रीसिद्धसेनपादा )

॥ इति समन्वयकाण्ड' ॥

अनल्पग्रन्थसदर्भान् समालोक्य यथामति ।
तत्त्वागतारूपोऽय रचितस्सारसग्रह ॥ १ ॥

---

१ जूओ १४ मा धर्मनाथस्वामिनु स्तवन—( आनदघन चोवीशी )

पूर्वं माध्यस्थमाश्रित्य सर्वं वाच्य विवेचितम् ।
सम्प्रदायधिया पश्चात् तत्त्वाद् रूढिर्मलीयसी ॥ २ ॥

अन्ते समन्वित काण्डमाख्यात तत्त्वबुद्धये ।
हारिभद्र वच श्रित्वा तेन स्यात् तत्त्वगो जन ॥ ३ ॥

भूयादिय कृतिर्लघ्वी विदुपा तोपकारिणी ।
कृच्छ्रेपु जिनतन्त्रेपु मन्धधीपोपणी यतः ॥ ४ ॥

प्रमादात् स्खलन क्वापि चापल्य मेऽत्र चेद् यदि ।
क्षन्तुमर्हन्ति विद्वासो मुहुरेतन्निवेदनम् ॥ ५ ॥

॥ समासस्तत्त्वावतार. ॥



पूर्वं माध्यस्थमाश्रित्य सर्वं वाच्य विवेचितम् ।
सम्प्रदायधिया पश्चात् तत्त्वाद् रूढिर्वलीयसी ॥ २ ॥

अन्ते समन्वित काण्डमाख्यात तत्त्वबुद्धये ।
हारिभद्र वच श्रित्वा तेन स्यात् तत्त्वगो जन ॥ ३ ॥

भूयादिय कृतिर्लघ्वी विदुषा तोषकारिणी ।
कृच्छ्रेषु जिनतन्त्रेषु मन्दधीपोषणी यतः ॥ ४ ॥

प्रमादात् स्खलन क्वापि चापल्य मेऽत्र चेद् यदि ।
क्षन्तुमर्हन्ति विद्वासो मुहुरेतन्निवेदनम् ॥ ५ ॥

॥ समासस्तत्त्वावतारः ॥

